क्लेशनदीमुच्छोषयन्ति[1] जातिजराव्याधिमरणभयशोकपरिदेव-दुःखदौर्मनस्योपायासेभ्यः[2] परिमुच्यन्ति[3] ।

पुनरपरं मंजुश्रीः सन्ति सत्त्वा ये[4] पैशुन्याभिरताः सत्त्वानां परस्परं कलहविग्रहविवादान् कारापयन्ति[5] ते परस्परं विग्रहचित्ताः सत्त्वा [6]नानाविधमकुशलमभिसंस्कुर्वन्ति कायेन वाचा मनसा अन्योन्यमहितकामा[7] नित्यं परस्परमनर्थाय[8] पराक्रामन्ति ते च वनदेवतामावाहयन्ति[9] वृक्षदेवतां गिरिदेवतां च श्मशानेषु [10]पृथक्-पृथग्भूतानावाहयन्ति तिर्यग्योनिगतांश्च प्राणिनो[11] जीविताद् व्यवरोपयन्ति[12] मांसरुधिरभक्षान् [13]यक्षराक्षसान् पूजयन्ति । तस्य शत्रोर्नाम[14] वा शरीरप्रतिमां वा कृत्वा तत्र घोरविद्यां[15] साधयन्ति कार्खोर्दवेतालानुप्रयोगेन[16] जीवितान्तरायं वा शरीरविनाशं[17] वा

1 C क्लेशनदीं परिमुच्यन्ति ; Tib. སྐེམས་ པར་ འགྱུར=to be dried up. Cf. *Mvyut*. 245. 361 उच्छुष्यते  2 B ०पासेभ्यः ; C जातिजरामरणशोकदुःख०

3 C omits परिमुच्यन्ति ; Tib. ཡོངས་ སུ་ ཐར་ བར་ འགྱུར །

4 B omits ये  5 A कुर्वन्ति  6 B ०विधममकु०

7 C अन्योन्याहित०  8 Tib གནོད་པར་བྱ་བའི་ ཕྱིར །

9 C पराक्रमन्ति ते वनदेव० ; Tib. ནགས་ཚལ་ གྱི་ ལྷ །

10 A ०तामावाहयन्ति ; B पृथपृथग्० ; Tib. འབྱུང་པོ=a demon ; a spirit.

11 C तिर्यग्योनिगतानां प्राणिनां

12 B जीविताव्यवरोपयति ; Cf. *Mvyut*. 130. 32; Pali : जीविता वोरोपेति in Digha, III, p. 235.  13 A & C ०भक्षयक्षरा० ; B भक्षान्ययक्षराक्षस्यान

14 B ०नामं ; C शत्रुस्य नामं ; Tib. དགྲ་ བོ་ དེའི་ མིང་ །

15 Tib. རིག་ སྔགས་ དྲག་ པོ=घोरमन्त्रः=dreadful spells.

16 C ०वेतालप्रयोगेन ; Tib. བྱད་སྟེམས=a kind of curse ; cf. *Mvyut*., 197, 141.  17 B ०विक्षेपं

कर्तुकामाः । यैः पुनस्तस्य[1] भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयं श्रुतं भविष्यति तेषां न शक्यं केनान्तरायं कर्तुम्[2] । सर्वे च[3] ते परस्परं मैत्रचित्ता[4] हितचित्ता अव्यापन्नचित्ताश्च विहरन्ति[5] स्वकस्वकेन परिग्रहेण संतुष्टाः ।

पुनरपरं मंजुश्रीरेताश्चतस्रः पर्षदो[6] भिक्षुभिक्षुण्युपासकोपासिका ये चान्ये[7] श्राद्धाः कुलपुत्रा वा कुलदुहितरो वा आर्याष्टांगैः समन्वागता[8] उपवासमुपवसन्ति एकवार्षिकं वा त्रैमासिकं वा[9] शिक्षापदं धारयिष्यन्ति[10] येषामेवं प्रणिधानमेवमभिप्रायमनेन वयं[11] कुशलमूलेन पश्चिमायां दिशि सुखावत्यां लोकधातौ[12] उपपद्येम[13] यत्रामितायुस्तथागतः । यैः पुनस्तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य[14] नामधेयं श्रुतं भविष्यति तेषां मरणकालसमये अष्टौ बोधिसत्त्वा ऋद्ध्यागता[15] उपदर्शयन्ति[16] ते तत्र नानारंगेषु[17] पद्मेषूपपादुका प्रादुर्भविष्यन्ति[18] । केचित् पुनर्देवलोक उपपद्यन्ते[19] तेषां तत्रोपपन्नानां पूर्वकं कुशलमूलं[20] न क्षीयते

1 C यैः श्रुतं भविष्यति पुन॰ 2 A & C नामधेयं तस्य न केनचिदन्तरायं कर्तुम्
3 B omits सर्वे च 4 B चित्रा for चित्ता in all the three places.
5 C अव्यापादचित्ता विह॰ 6 C ॰श्रीरेते चत्वारः परिषा
7 ॰पासिकाः चान्ये Śikṣā., p. 175.
8 B ॰तामुप वास॰ ; C ॰दुहिता वाष्टाङ्गसमन्वागतम्
9 B drops त्रैमासिकं वा Śikṣā. त्रैवार्षिकं Tib. ཟླ་བ་གསུམ། ।
10 C & Śikṣā. धारयन्ति 11 C येषामभिप्रायम् एवं प्रणिधानमनेन च
12 B ॰धातो 13 C उपपद्यते
14 B तथागतागतस्य 15 B ऋद्धागता॰ ; C ऋद्धागत्वा
16 B ॰मुपादर्शयति ; C मार्गमुपदर्शयन्ति तेषां तत्र 17 B ॰रङ्गैषु
18 C ॰र्भविष्यति 19 C उपपत्स्यन्ते 20 B ॰मूलै॰ ; C तत्पूर्वं कुशल॰

न च दुर्गतिगमनं[1] भविष्यति। ते ततश्च्युत्वा[2] इह मनुष्यलोक उपपत्स्यन्ते[3] राजानो भविष्यन्ति[4] चतुर्द्वीपेश्वराश्चक्रवर्तिनस्ते[5] अनेकानि सत्त्वकोटीनियुतशतसहस्राणि दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयिष्यन्ति[6]। अपरे पुनः क्षत्रियमहाशालकुलेषु[7] ब्राह्मणमहाशालकुलेषु[8] गृहपतिमहाशालकुलेषु[8] प्रभूतधनधान्यकोशकोष्ठागारसमृद्धेषु[9] च कुलेषूपपत्स्यन्ते। ते[10] रूपसंपन्नाश्च भविष्यन्ति[11] ऐश्वर्यसंपन्नाश्च भविष्यन्ति[12] परिवारसंपन्नाश्च भविष्यन्ति[13]। यश्च मातृग्रामः[14] तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य[15] तथागतस्य नामधेयं श्रुत्वा चोद्ग्रहीष्यति[16] तस्य[17] स एव पश्चिमस्त्रीभावः[18] प्रतिकांक्षितव्यः।

अथ खलु मंजुश्रीः कुमारभूतो भगवन्तमेतदवोचत्। अहं भगवन् पश्चिमे काले पश्चिमे समये तेषां श्राद्धानां कुलपुत्राणां कुलदुहितृणाञ्च तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य

1 B ०गामिनो  2 A & B ०श्च्यवित्वा  3 C drops it.
4 A भवति  5 B ०वर्त्तीते ; C चतुर्द्वीपचक्रव०
6 A & B ०ष्ठापयन्ति  7 C ०कुलेषूपपद्यन्ते ब्रा०
8 C ०शालकुले  9 B संवृमृद्धषु
10 C ०ते स्यन्ति रुपसंप०  11 C drops it.  12 B भवेयुः ; C drops it
13 C ०पन्नाश्चशूराश्च वीरश्च महानग्नवला महागन्धधारिणाश्च भवि०
14 A & C येन पुनर्मातृग्रामेण  15 C drops भगवतो भैषज्यगुरुवैदूर्यप्रभस्य
16 B ०गृहिष्यति ; C नाम उद्ग्र०  17 A & C ०ष्यन्ति उद्गृहीतं स
18 A & C पश्चिमकमातृग्रामभावः

नामधेयं श्रावयिष्यामि[1] अन्तशः[2] स्वप्नान्तरमपि[3] बुद्धनामकं कर्णपुटेषूपसंहारष्यामि[4] । य इदं सूत्ररत्नं[5] धारयिष्यन्ति वाचयिष्यन्ति देशयिष्यन्ति पर्यवाप्स्यन्ति[6] परेभ्यो विस्तरेण संप्रकाशयिष्यन्ति लिखिष्यन्ति लिखापयिष्यन्ति[7] पुस्तकगतं वा कृत्वा सत्करिष्यन्ति[8] नानापुष्पधूपगन्धमाल्यविलेपनच्छत्रध्वजपताकाभिस्तैस्तत् पंचरंगिकवस्त्रैः[9] परिवेष्ट्य[10] शुचौ प्रदेशे स्थापयितव्यम् । यत्रैव इदं सूत्रान्तं स्थापितं भवति[11] तत्र [12]चत्वारो महाराजानः सपरिवारा अन्यानि चानेकानि [13]देवकोटिनियुतशतसहस्राणि उपसंक्रमिष्यन्ति[14] तत्रेदं सूत्रं प्रचरिष्यति[15] । ते च भगवन् इदं सूत्ररत्नं प्रकाशयिष्यन्ति[16] । तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्वप्रणिधानविशेषविस्तरविभागं च[17] तस्य

1 C नामधेयं नानोपायैः संश्रा० 2 B अश

3 A & C ०न्तरगतानामपि 4 C बुद्धानां नाम कर्णपुटे निपतिष्यति ; Tib. puts the lines 20b. 4—21a, 2 after पताकाभिः and before तै पञ्च etc.

5 C सूत्रं धार० 6 C omits पर्यवाप्स्यन्ति

7 Cf. कारण्डव्यूह (Bengal ed.), p. 23.

8 B संस्करिष्यन्ति ; C पुस्तकलिखितं वा सत्करिष्यन्ति

9 C ०विलेचूर्णचीवरच्छत्रध्वजपताकाभिः पञ्चरंगिकैर्वस्त्रैः

10 C परिवेष्टयित्वा 11 C स्थापयितव्य । तत्र चत्वारो महाराजानः सपरिवारा अन्ये च देवताकोटिशतसहस्राण्युपसंहरिष्यन्ति । यत्र इदं सूत्रं प्रचरिष्यति य इमं सूत्रं धारयिष्यति । Tib. གང་ན་མདོ་སྡེ་འདི་གནས་པ་དེར་རྒྱལ་པོ་ཆེན་པོ་བཞི ། Chinese: 而 用 安 處 and omits सूत्रान्तं

12 C ततश्चत्वारो 13 C च देव०

14 B तत्रोपसंक्रमयन्ति 15 B प्रचरिष्यामि 16 C यत्रेदं सूत्रं प्रचरिष्यति

17 A & C ०विशेषविस्तरं च

तथागतस्य नामधेयं धारयिष्यन्ति तेषां नाकालमरणं[1] भविष्यति न तेषां केनचिच्छक्यमोजोऽपहर्तुम्[2] । हृतं वा ओजः पुनरपि प्रतिसंहरति[3] । भगवानाह । एवमेतद् मंजुश्रीरेवमेतत्तद्यथा वदसि । यश्च मंजुश्रीः श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्य तथागतस्य पूजां कर्तुकामस्तेन[4] तस्य तथागतस्य प्रतिमा कारापयितव्या[5] सप्तरात्रिन्दिवम्[6] आर्याष्टांगमार्गसमन्वागतेनोपवासमुप[7]-वसितव्यम् । शुचिना शुचिमाहारं कृत्वा[8] शुचौ प्रदेशे [नानापुष्पाणि संस्तार्य[9]] नानागन्धप्रधूपिते[10] नानावस्त्रच्छत्रध्वजपताकासमलङ्कृते[11] तस्मिन्[12] पृथिवीप्रदेशे सुस्नातगात्रेण शुचिविमलवसनधारिणा निर्मलचित्तेनाकलुषचित्तेन[13] अव्यापादचित्तेन[14] सर्वसत्त्वेषु[15] मैत्रचित्तेन [उपेक्षाचित्तेन[16]] सर्वसत्त्वा-

1 B न कलमरणं or न कमावरणं । The Tibetan rendering supports our reading.

2 A ०मोजोपहति ; B ०मोजमप०    3 B प्रत्याहरन्ति

4 B ०कामेनस्तेन ; C omits पूजां कर्तुकामस्तेन

5 B प्रतिमां कारापयितव्यां    6 B adds here सप्त ; C ०न्दिवसं

7 B ०गतोमुप० ; C ०गत उपवसितव्यः

8 A & B शुचिमाहारभोजनं भुक्त्वा

9 A नानापुष्पाभिकीर्णो ; C नानापुष्पावकीर्णो ; Tib. མེ་ཏོག་ སྣ་ཚོགས་ (བསིལ་མ་) བཀྲམ་པ །

10 B नानागन्धनिर्धूपिते ; C नानागन्धानि धूपित्वा

11 C ०काभिः समलङ्कृते    12 B सा ; A & C omit तस्मिन्

13 B ०चित्तेन in all the places.    14 B & C omit अव्यापादचित्तेन

15 A omits सर्वसत्त्वेषु    16 A omits उपेक्षाचित्तेन Tib. བྱམས་པའི་ སེམས་དང་བཏང་སྙོམས་ཀྱི་སེམས་དང and the same in Chinese.

नामन्तिके[1] समचित्तेन भवितव्यम्[2] । नानातूर्यसंगीतिप्रवादितेन[3] सा[4] तथागतप्रतिमा प्रदक्षिणीकर्तव्या । तस्य[5] तथागतस्य पूर्वप्रणिधानानि मनसिकर्तव्यानि । इदं सूत्रं प्रवर्तयितव्यम्[6] । यं चेतयति[7] यं प्रार्थयति तं[8] सर्वाभि[प्रायं] परिपूरयति यदि [दीर्घमायुः कामयते[9]] दीर्घायुष्को भवति यदि भोगं[10] प्रार्थयते[11] भोगसमृद्धो भवति यद्यैश्वर्यमभिप्रार्थयते तद्[12] अल्पकृच्छ्रेण प्राप्नोति[13] यदि पुत्राभिलाषी[14] भवति पुत्रं प्रतिलभते[15] । य इह पापकं स्वप्नं पश्यन्ति यत्र वाय[सः][16] स्थितो भवति दुर्निमित्तं वा[17] यत्रामङ्गलशतं वा स्थितं भवति[18] तैस्तस्य[19] भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूजा[20] कर्तव्या । सर्वदुःस्वप्नदुर्नि-

1 B ॰न्तिकेन ; Tib. omits सर्वसत्त्वानामन्तिके

2 A सर्वसत्त्वेषु हितचित्तेन भवितव्यम् । करुणाचित्तेन मुदिताचित्तेन उपेक्षाचित्तेन समचित्तेन भवितव्यम्

3 A वाद्यतूर्यसंगीतिसंप्रवादितेन

4 B & C या

5 A तथागतशरीरप्रतिमा कर्तव्या । तस्य

6 A omits इदं सूत्रं प्रवर्तयितव्यम् ; C प्रकाशयितव्यम् ; Tib. བསྒྲུན་ན །

7 A & C चिन्तयन्ति

8 B omits तं

9 A & C दीर्घायुष्कतां प्रार्थयति ; Tib. གལ་ཏེ་ ཚེ་རིང་ པོར་ སྨོན་ན་ནི་ ཚེ་རིང་ པོར་འགྱུར་རོ །

10 A & C भोगान्

11 A, B & C ॰यति

12 B & C omit तद्

13 A लाभ भवति ; C लभति

14 B ॰लाभी

15 B पुत्रप्रतिलाभं प्रतिलभे

16 A B & C तत्र ; Tib. བྱ་ཁྲ=वायसः

17 A & C ॰मित्तं वा पश्यति

18 Tib. གང་ དུ་ བྱ་ ཁྲ་ དང་ ། ལྟས་ངན་པ་ མཐོང་ ངམ ། གནས་ གང་དུ་ བཀྲ་མི་ ཤིས་པ་ བརྒྱ་དག་ གནས་པར་གྱུར །

19 A & C यत्र स्थाने शतमलक्ष्मीणामुपस्थितो भवति ये तस्य

20 A & C पूजाभिसंस्कारं

मित्तामाङ्गल्याश्च[1] भावाः प्रशमिष्यन्ति । येषामग्न्युदक[2]-विपशास्त्र-प्रपात[3]-चण्डहस्तिसिंह[4]-व्याघ्रऋक्षतरक्षु[5]-द्वीपिकाशीविष[6]-वृश्चिक-शतपददंशमशकादिभयं भवति तैस्तस्य[7] तथागतस्य पूजा कर्तव्या । ते सर्वभयेभ्यः परिमोक्ष्यन्ते । येषां [8]चोरभयं तस्कर-भयं[9] तैस्तस्य[10] तथागतस्य पूजा कर्तव्या[11] ।

पुनरपरं मंजुश्रीर्ये[12] श्राद्धाः कुलपुत्रा वा कुलदुहितरो वा ये[13] यावज्जीवं त्रिशरणमुपगृह्णन्ति[14] अनन्यदेवताश्च भवन्ति[15] ये पंच शिक्षापदानि[16] धारयन्ति ये च [17]बोधिसत्त्वसंवरं चतुर्वर-शिक्षापदशतं[18] धारयन्ति ये पुनरपि निष्क्रान्तगृहवासा भिक्षवः पंचाधिके[19] द्वे शिक्षापदशते[20] धारयन्ति या भिक्षुण्यः पंचशत-शिक्षापदानि धारयन्ति ये च यथापरिगृहीताच्छिक्षासंवरादन्य-

1 B ०सङ्गैल्याश्च ; Tib. དངོས་པོ་ ཐམས་ཅད་ འཐོང་བར་མི་གྱུར་རོ =भावा न दृष्टा भवन्ति

2 A & C ०मग्निभयमुदकभयं ; B ०मग्न्युसुदक०

3 A & C omit विषशस्त्रप्रपात ; B प्रदात ; Tib. གཡང་ས །

4 A & C ०हस्तिभयं सिंह० ; B ०सिंध०

5 A & C व्याघ्रभयम् ऋक्ष० ; B ०रिक्षतरक्ष०

6 A & C ०तरक्ष्वाशी० ; B ०श आशी०

7 A & C ०शतपदभयं तैस्तस्य

8 A & C मोच्यन्ति तेषां परचक्रभयं चोर० ; B यं चोर०

9 Tib. ཆོམ་པོས་འཇིགས།

10 B तैस्तैस्तस्य

11 B करणीया

12 C omits ये

13 C ०दुहिता वा

14 C ०मुद्गृह्णन्ति

15 C omits भवन्ति ; Cf. Śikṣā., p. 174

16 Cf. Śikṣā., 174: चतुर्थं शतं शिक्षापदानां धारयन्ति

17 C ये दश शिक्षापदानि धारयन्ति च

18 C चतुर्थशतं शिक्षापदं धा०

19 B ०धिकै

20 B द्वे शिक्षापदशतैर्द्धार० C द्विशतपञ्चाशशिक्षापदानि

तराच्छिक्षापदाद्भ्रष्टा[1] भवन्ति सचे ते दुर्गतिभयभीतास्तस्य[2] भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयं धारयेयुर्न भूयस्तेषां[3] [त्व्य]पायगमनदुःखं[4] प्रतिकांक्षितव्यम् । यश्च मातृ-ग्रामः प्रसवनकाले तीव्रां दुःखां खरां कटुकां वेदनां वेदयति या तस्य[5] भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयमनु-स्मरेत्[6] पूजाञ्च कुर्यात् सा सुखं[7] च प्रसूयते सर्वाङ्गपरिपूर्णं[8] पुत्रं जनयिष्यति । अभिरूपः प्रासादिको दर्शनीयस्तीक्ष्णेन्द्रियो बुद्धिमान् स आरोग्य-स्वल्पाबाधो[9] भविष्यति न च शक्यते अमनुष्यैस्तस्य ओजोऽपहर्तुम्[10] ।

अथ खलु भगवानायुष्मन्तमानन्दमामन्त्रयते[11] स्म । श्रद्दधासि[12] त्वमानन्द पत्तीयिष्यसि[13] यदहं तस्य भगवतो भैषज्य-

1 C ०संवरा ततोऽन्यतरान्यतरात् पदभ्रष्टाः

2 A भवन्ति ते दुर्गत्यपायभीता० ; C भवन्ति दुर्गत्यपायभयभीतास्ते तस्य

3 A तथागतस्त पूजां कुर्वन्ति न तेषां ; B न भूयस्तैषां रुपाय ; cf. Sikṣā. p. 174 : धारयेयुर्यथा विभवतश्च पूजां कुर्युः न भूयस्तेषामपायगतिः

4 A ०पायदुःखं Tib. དེ་དག་ལ་ ངན་སོང་ གསུམ་གྱི་སྡུག་བསྔལ་ མེད་པར་ཞེས་ པར་བྱའོ།

5 B यास्तस्य

6 A & C ०गतस्य नमस्यन्ति

7 Tib. དེ་མྱུར་དུ=आशु

8 A पूजां कुर्वन्ति ते शीघ्रं परिमुच्यन्ति सर्वाङ्ग०; B सर्वपरिपूर्णाङ्गं ; C पूजां कुर्वन्ति शीघ्रं परिमुच्यन्ति सर्वाङ्ग०; Tib. བུ་ཡང་ཡན་ ལག་ཡོངས་སུ་ཚང་བར།

9 B सल्पा० ; C drops the words from स to ०नन्दमामन्त्रयते

10 B शक्यते मोजोपहर्तुम् Tib. དེ་ལ་མི་མ་ཡིན་པས་མདངས་འཕྲོག་ པར་མི་ནུས་སོ།

11 Cf. Sikṣā.. pp. 174-5. C omits अथ...नन्दमा०

12 B श्रद्धासि ; C श्रद्धास्यति

13 B पत्तीयसि evidently for प्रत्येषि

गुरुवैदूर्यप्रभस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य गुणान् वर्णयिष्यामि[1]। अथवा ते काङ्क्षा[2] वा विमतिर्वा विचिकित्सा वाऽत्र गंभीरे बुद्धगोचरे। अथायुष्मानानन्दो[3] भगवन्तमेतदवोचत्। न मे [भदन्त भगवन्][4] अत्र[5] काङ्क्षा वा विमतिर्वा विचिकित्सा वा तथागतभाषितेषु सूत्रान्तेषु[6]। तत् कस्य हेतोः। नास्ति तथागतानामपरिशुद्धकायवाङ्मनःसमुदाचारता[7]। इमौ[8] भगवंश्चन्द्रसूर्यावेवं महर्धिकावेवं[9] महानुभावौ पृथिव्यां प्रपतेता[म्][10] [11]स सुमेरुर्वा पर्वतराजः स्थाना[त्] चलेन्न[12] तु बुद्धानां वचनमन्यथा भवेत्[13]। किं तु भदन्त[14] भगवन् सन्ति सत्त्वाः श्रद्धेन्द्रियविकलाः इदं[15] बुद्धगोचरं श्रुत्वा एवं वक्ष्यन्ति[16]। [17]कथमेतन्नामधेयस्मरणमात्रेण[18] तस्य तथागतस्य तावन्तो[19]

1 B तथागतस्य गुणान्; C तथागतस्य गुणानुशंसान्; Sikṣā वर्णयामि

2 B काणखा    3 B ०ष्मानन्द

4 Tib. inserts here བཙུན་པ་ བཅོམ་ལྡན་འདས། Sikṣā follows it.

5 Sikṣā omits it.    6 C भाषितेषु धर्मेषु    7 A & C ०चारः

8 A इमे    9 C सूर्यचन्द्रमसौ एवं महर्धिकौ महा०

10 A & C निपतेयुः; B uses एकवचन instead of द्विवचन but the Sikṣā has द्विवचन while Tib. has དེ་ཉིས། B has इमे भगवंशश्चन्द्रसूर्यमेवं महर्धिकामेवं महानुभावा पृथिव्यां प्रपतेत    11 A & C Sikṣā, omit स

12 A & C संक्रमेत् न    13 B भवेयुः; C भवति

14 Sikṣā ये instead of इदं    15 A & C श्रुत्वा तेषामेवं भवति

16 A & C ०मिदं नाम०; Sikṣā श्रुत्वा न श्रद्दधति। तेषामेवं भवति। कथमिदं नाम०। Tib. has དེ་དག་སྙམ་དུ་ སེམས་ པར་འགྱུར་ཏེ།

17 A & B ०न्नामधेयमनुस्मरणं०

18 A, C & Sikṣā एत्तका; Tib. ཇི་ལྟར་ཞིན་ཏུ།

गुणानुशंसा भवन्ति[1]। ते न श्रद्दधति[2] न पत्तीयन्ति प्रतिक्षिपन्ति[3]। तेषां दीर्घरात्रमनर्थाय न हिताय न सुखाय[4] विनिपाताय भविष्यति। भगवानाह। अस्थानमानन्दानवकाशो येन[5] तस्य तथागतस्य नामधेयं श्रुतं[6] तस्य सत्त्वस्य दुर्गत्यपायगमनं[7] भवेन्नेदं स्थानं विद्यते दुःश्रद्धानीयं[8] चानन्द बुद्धानां बुद्धगोचरम्। यत् त्वमानन्द श्रद्दधासि[9] पत्तीयसि तथागतस्यैषोऽनुभावो द्रष्टव्यः। अभूमिरत्र[10] सर्वश्रावकप्रत्येकबुद्धानां स्थापयित्वैकजाति[प्रति]बद्धान्[11] बोधिसत्त्वान् महासत्त्वा[निति]। दुर्लभ आनन्द[12] मनुष्यप्रतिलाभः[13] दुर्लभं त्रिरत्ने[14] [श्रद्धागौरवं[15] सु]दुर्लभं[16] [तथागतस्य नामधेयश्रवणम्[17]]। तस्य [भगवतः] तथा-

1 A भविष्यन्ति 2 A & C श्रद्दधन्ति ; B श्रद्धददन्ति 3 B क्षेपन्ति

4 C ०र्थाय हिताय सुखाय ; Sikṣā ०र्थायाहितायासुखाय

5 A & C ०काश एषां 6 A ०धेयं कर्णपुटे निपतेत् ; B puts here य

7 A तस्य दुर्ग० ; B दुर्गतिगमनं ; Sikṣā. येषां तस्य नामधेयं निपतेत् कर्णे ( Tib. कर्णपुटे ) तेषां दुर्गत्यपायगमनं भवेदिति। Tib. follows Sikṣā.

8 A भवेन्न दुःश्र० ; C ०गतस्य नामधेयं कर्णपुटे निपतितं यत् तस्य दुर्गत्यपायगमनं भवेत् दुःश्रद्दधनीयं 9 B श्राद्धासि 10 A & C Sikṣā. ०मिश्चात्र

11 B ०जातिलब्धा ; Tib. སྐྱེ་བ་གཅིག་གིས་ཐོགས་པ་རྣམས། Evidently our scribe did not know the word एकजातिप्रतिबद्धा i. e. those who have one birth more only intervening between him and his Nirvāṇa Cf. *Lal. Vis.*, p. 2.

12 C महासत्त्वा दुर्लभानन्द 13 A & B ०लाभं 14 A & C त्रिषु रत्नेषु

15 Tib. དཀོན་མཆོག་གསུམ་ལ་དད་ཅིང་གུས་པ་ཡང་རྙེད་དཀའོ།

16 A & C दुर्लभतरस्य 17 B नामश्रवणम् ; Tib. དེ་བཞིན་གཤེགས་པ་དེའི་མཚན་ཐོས་པ་ཡང་རྙེད་པར་ཤིན་དུ་དཀའ་འོ།

गतस्य [भैषज्यगुरुवैडूर्यप्रभस्यानन्द[1] ] बोधिसत्त्वचर्यामप्रमाणामुपायकौशल्यमप्यप्रमाणम् [अप्रमाणं चास्य] प्रणिधान[विशेष]विस्तरम्[2] । आकाङ्क्षमाणोऽहं तस्य तथागतस्य[3] कल्पं वा कल्पावशेषं[4] वा बोधिसत्त्वचारिकाया विस्तरविभङ्गं निर्दिशेयम्[5] । क्षीयेतानन्द कल्पं न त्वेव [शक्यं] तस्य[6] भगवतो भैषज्यगुरुवैडूर्यप्रभस्य तथागतस्य पूर्वप्रणिधानविशेषविस्तरा[न्त]मधिगन्तुम्[7] ।

तेन खलु[8] पुनः समयेन तस्यामेव पर्षदि[9] त्राणमुक्तो नाम बोधिसत्त्वो महासत्त्वः सन्निपतितोऽभूत् । सन्निषण्णः[10] उत्थाया-

1 A & C अप्रमाणाम् आनन्द ; Tib. ཀུན་ དགའ་བོ་ བཅོམ་ལྡན་ འདས་ དེ་བཞིན་ གཤེགས་པ་ སྨན་ གྱི་ བེ་ཌཱུ་རྱའི་ འོད་དེའི་ བྱང་ཆུབ etc.

2 C ०मप्यप्रमाणं प्रणिधानविस्तरम् ।

3 The Ms. is confusing. The text given here is based mainly on the Tib version. Tib. ཐབས་ལ་ མཁས་པ་ཡང་ ཚད་མེད་དོ། སྨོན་ལམ་གྱི་ ཁྱད་པར་ རྒྱས་པ་ཡང་ ཚད་མེད་དོ། ང་དེ་བཞིན་གཤེགས་ པ་དེའི་བྱང་ ཆུབ་སེམས་ དཔའི་སྤྱོད་པ་ བསྐལ་པ་ འམ་ བསྐལ་པ་ལས་ ལྷག ( कल्पाधिकं ) པར་གྱི་ ཆེར་ ཡང་དག་པར་ བཤད་ པར་ འདོད་ ཀྱང་ བསྐལ་པ་ ཟད་པར་ འགྱུར་ གྱི བཅོམ་ལྡན་ འདས་ དེ་ བཞིན་ གཤེགས་ པ་ སྨན་གྱི་ བླ་ བེ་ཌཱུ་རྱའི་ འོད་ དེའི་ སྔོན་གྱི་ སྨོན་ལམ་གྱི་ཁྱད་པར་ རྒྱས་པའི་ མཐའ་ རྟོགས་པར་ མི་ འགྱུར་རོ། Cf. Taisho ed., XIV, p. 407, Col. 2, ll. 6-9.

4 C कल्पेन वा कल्पावशेषेण

5 A ०चारिकां विस्तर० ; C चारिका विस्तरेण संप्रकाशेयम्

6 C त्वेव तस्य

7 A ०विस्तरपर्यन्तमधि० ; C ०विस्तरस्य पर्यन्तोऽधिगन्तुम्

8 C तेन च पुनः

9 A तत्र परिषायां ; C तस्मिन् एव

10 C omits सन्निपतितोऽभूत् सन्निषण्णः

सनादेकांसमुत्तरासङ्ग[1] कृत्वा[2] दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। भविष्यन्ति [भदन्त[3]] भगवन् सत्त्वाः पश्चिमे काले पश्चिमे समये नानाव्याधिपरिपीडिता दीर्घव्याधिना[4] [क्षीणगात्राः] क्षुत्तर्षाभ्यां[5] शुष्ककण्ठोष्ठा मरणाभिमुखा रोरुद्यमानैर्मित्रज्ञातिसलोहितैः[6] परिवारिता अन्धकारां दिशं पश्यन्तो[7] यमपुरुषैराकर्ष्यमाणाश्च[8]। तस्य कलेवरे[9] मंचशायिते[10] विज्ञानं यमस्य धर्मराजस्याग्रतामुपनीयते। यच्च तस्य सत्त्वस्य[11] [12]सहजानुबद्धमेव[13] यत्किंचित् तेन पुरुषेण कुशलमकुशलं[14] वा कृतं भवति तत्सर्वं सुलिखितं कृत्वा यमस्य धर्मराजस्योप[ना]म्यते। तदा[15] यमोऽपि धर्मराजस्तं पृच्छति गणयति[16] यथाकृतं[17] चास्य कुशलमकुशलं वा तथाज्ञामाज्ञापयति। तत्र ये ते मित्रज्ञाति-

1 A & C ०कांसं चीवरं  2 A प्रावरित्वा ; C प्रावृत्य

3 Tib. བཙུན་པ་བཅོམ་ལྡན་ འདས།

4 A & C समये सत्त्वा नानाव्याधिपरिपीडिता दीर्घग्लान्येन

5 B अचक्षुतशुष्क० ; C क्षुतृतर्षा ; Tib. བཀྲེས་ པ་དང་། སྐོམ་པས་། གྲི་དང་།

6 A ०ज्ञातिसालोहितेभिः, C रोदमानेभि०  7 C दिशमपश्यन्तो यम०

8 A ०पुरुषैर्वाकर्षयमाणा ; C ०पुरुषैरपकर्षमाणा : B ०माणास्य

9 A & C अत्र ; C कलेवरं  10 C ०वरं शयितं

11 A मनुष्यसह० C पुरुषस्य सहजा

12 B सहजानु० cf. Tib. ལྷན་ཅིག་སྐྱེས་པའི་ སྣད་ བཞིན་ འབྲང་བ། C सहजा स्पृष्ठानुबद्धा देवता यत् तेन कुशलं वा कुशलं कुतं भवेत् तच्च

13 B तास्य  14 A कुशलमूलं वा कृशलमूलं

15 A ०नामयति यमो० ; C ०नाम्यते यमो०

16 Tib. བརྟགས་ནས་ परीक्तते  17 B ०यति यतं

सलोहितास्तस्यातुरस्यार्थाय तं भगव[न्तं] भैषज्यगुरुवैदूर्यप्रभं तथागतं शरणं गच्छेयुस्तस्य [च] तथागतस्य पूजां कुर्युः। [1]स्थानमेतद्विद्यते य[त्] तस्य तद्विज्ञानं पुनरपि प्रतिनिवर्तेत स्वप्नान्तरगत इवात्मानं संजानीते[2]। यदि वा सप्तमे दिवसे यदि वा [एकविंशतिमे] दिवसे यदि वा पञ्चविंशतिमे[3] दिवसे यदि वा एकोनपञ्चाशतिमे[4] दिवसे तस्य विज्ञानं पुनरपि निवर्तेत[5] स्मृतिमुपलभेत। तस्य[6] कुशलमकुशलं वा कर्मविपाकं[7] स्वयमेव प्रत्यक्षं[8] भवति। ज्ञात्वा स जीवितहेतौ[9] [न कदा]पि पापमकुशलं कर्म करिष्यति[10]। तस्माच्छ्राद्धेन कुलपुत्रेण वा कुलदुहि[त्रा] वा तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूजा कर्तव्या[11]।

अथायुष्मानानन्दस्त्राणमुक्तं[12] नाम बोधिसत्त्वमेतदवोचत्[13]। कथं कुलपु[त्र] तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य पूजा कर्तव्या।

1 A तेन तस्यातुरस्यार्थायेद्दशेन प्रयोगेन पूजा कर्तव्या स्थानमेतद्विद्यते यदि तस्य ; C ०ज्ञापयति ये तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य शरणं गमिष्यन्ति तस्यातुरस्यार्थायेद्दशेन प्रयोगेन पूजां कुर्वन्ति। स्थान० ; A शरणं गमिष्यन्ति

2 C ०न्तरे च आत्मानं संजानाति

3 B पञ्चविंशतिमे but Tib. ཉི་ཤུ་རྩ་གཅིག Chin. (Taisho. XIV, p. 407, para 2)

4 C नवचत्वारिंशतिमे

5 C विज्ञानं निव०

6 B & C स

7 Tib. ལས་ཀྱི་རྣམ་པར་སྨིན་པ།

8 C प्रत्यक्षो

9 C भवति। जीवितहेतुरपि

10 C पापं कर्म न करोति

11 B adds ०गतस्य नामधेयं धारयितव्यं यथा संविद्यमाना च पूजा कर्तव्या ; Tib. omits this line. The restoration from Tib. would be तस्य तथागतस्य पूजा कर्तव्या

12 B त्राण० ; C ०त्राणमुक्तस्य

13 C बोधिसत्त्वस्य एवमाह

त्राणमुक्तो बोधिसत्त्व आह। ये भदन्तानन्द[1] महतो[2] व्याधितः[3] परिमोचितुकामास्तैस्तस्यातुरस्यार्थाय सप्त दिवसान्यार्याष्टाङ्गसमन्वागतमुपवास[मु]पवसितव्यं[4] भिक्षुसंघस्य चाहारपानैः सर्वोपकरणै[र्यथा]शक्ति[5] पूजोपस्थानं कर्तव्यम्। [6]भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयं त्रिष्कृत्वा रात्र्यां त्रिष्कृत्वा दिवसे मनसिकर्तव्यम्[7]। [8]नवचत्वारिंशद्वारे इदं सूत्रमुच्चारयितव्यम्। एकोनपञ्चाशद्[9] दीपाः प्रज्वालयितव्याः[10]। सप्त प्रतिमाः कर्तव्याः। एकैकया प्रतिमया सप्त सप्त दीपाः[11] प्रज्वालयितव्याः[12]। एकैको[13] दीपः शकटचक्रप्रमाणः कर्तव्यः। यद्येकोनचत्वारिंशतिमे[14] दिवसे आलोको न क्षीयते वेदितव्यं सर्वसंपदिति[15]। पञ्चरङ्गिकाश्च पताका एकोनपञ्चाश[दधिकाः][16] कर्तव्याः।

1 B भगवतानन्द ; cf. Tib. བཙུན་ པ་ཀུན་ དགའ་བོ །

2 B व्याधितं महतो० · 3 B व्याधि ; C महान्तः व्याधयः

4 C सप्तरात्रिं दिवसान्यार्याष्टाङ्गसमन्वागतमुपोषधसंवरं ग्रहीतव्यम्

5 All Mss. यथा शक्त्या

6 तथागत भगवता ; Tib. omits the preceding two lines from सप्त०

7 Tib. ཡིད་ལ་བྱའོ། The confusion made here by the scribe shows that the lines not in Tibetan were later additions. It is not the composition of the scribe, for in that case he would not have a mess of the sentences and words: B ०प्रभस्तथागतृष्कृत्वा रात्र तृष्कृत्वा दिवसौ नमस्करनचत्वारिंश०

8 Tib. has བཞི་བཅུ་རྩ་དགུ=एकोनपञ्चाशत् 9 C तथागतस्य त्रिष्कृत्वा रात्रौ दिवसस्य तस्य नमस्यितव्यम् 10 C प्रदीपितव्याः 11 B प्रतिमया सप्त दीपाः

12 C स्थापयितव्याः ; Tib. བཞག་གོ=स्थापयितव्याः 13 C एकमेको

14 C यदि नवचत्वारिंश० 15 C omits वेदितव्यं सर्वसम्पदिति

16 B एकोनपंचचकः ; C पताका नवचत्वारिंशद्दष्टिकाः ; Tib. བཞི་བཅུ་རྩ་དགུ་ལས་ ལྷག་པར་བྱའོ །

पुनरपरं भदन्तानन्द येषां राज्ञां क्षत्रियाणां[1] मूर्धाभिषिक्ता-नामुपद्रवा वोपसर्गा वा ये[2] प्रत्युपस्थिता भवेयुर्व्याधिपीडा[3] वा स्वचक्रपीडा वा [प]रचक्रपीडा[4] वा नक्षत्रपीडा वा चन्द्रग्रहसूर्यग्रहपीडा वा [अकालवातवृष्टिपीडा वा अवग्रहपीडा[5] वा समुत्थिता अमाङ्गल्या वा संक्रामकव्याधिर्वा विपद् वा समुपस्थिता तेन राज्ञा] क्षत्रियेण मूर्धाभिषिक्तेन सर्वस[त्त्वेषु] मैत्रचित्तेन भवितव्यं बंधनगताश्च सत्त्वा मोचयितव्याः। तस्य च भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य यथापूर्वोक्तपूजा करणीया[6]। तदा तस्य राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य एतेन कुशलमूलेन च[7] तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्वप्रणिधानविशेषविस्तरेण[8] तत्र विषये क्षेमं भविष्यति

1 B क्षत्रियानं 2 B येषां ; C ०सर्गा उपायासः

3 Tib. ནད་ཀྱི་གནོད་པ།

4 Ms. B drops here two lines ; cf. Tib. ཕ་རོལ་གྱི་དམག་ཚོགས་ཀྱིས་གནོད་འམ། རྒྱུ་སྐར་གྱི་གནོད་པ་འམ། གཟའ་ཟླ་བའི་གནོད་པ་འམ། གཟའ་ཉི་མའི་གནོད་པ་འམ། དུས་མ་ཡིན་པའི་རླུང་དང་། ཆར་གྱི་གནོད་པ་འམ། ཐན་པའི་གནོད་པ་ཡང་རུང་སྟེ། གནོད་པ་དང་ནད་འགོ་བ་དང་འཁྲུག་པ་ཞིག་བར་གནས་པར་གྱུར་ན། རྒྱལ་པོ། 5 C अनावृष्टिपीडा तेन राज्ञा क्षत्रियेण

6 C तथागतस्य तादृशी पूजा कर्तव्या यथापूर्वोक्तम्

7 Tib. དགེ་བའི་རྩ་བ་དེ་དང 8 A & C ०विशेषेण तत्र

सुभिक्षं कालेन वातवृष्टिशस्यसम्पदो भविष्यन्ति[1] सर्वे च विषयनिवासिनः सत्त्वा[2] अरोगाः सुखिताः [3]प्रामोद्यबहुलाः। न च तत्र विषये दुष्टयक्षराक्षसभूतपिशाचाः[4] सत्त्वानां विहेठयन्ति[5]। सर्वदुर्निमित्तानि च न पश्यन्ति[6]। तस्य च राज्ञः क्षत्रियस्य[7] मूर्धाभिषिक्तस्य [8]आयुर्वर्णबलारोग्यैश्वर्याभिवृद्धिर्भविष्यति। अथायुष्मानानन्दस्त्राणमुक्तं बोधिसत्त्वमेतदवोचत्[9]। कथं कुलपुत्र परिक्षीणायुः पुनरेवाभिविवर्धते[10]। त्राणमुक्तो बोधिसत्त्व आह। ननु त्वया[11] भदन्तानन्द तथागतस्यान्तिकाच्छ्रुतम्। सन्ति [12]अकालमरणानि। तेषां प्रतिक्षेपेण मन्त्रौषधिप्रयोगा[13] उपदिष्टाः। सन्ति सत्त्वा व्याधिताः। न च गुरुको व्याधिः[14]। भैषज्योपस्थापकविरहिता[15] यदि वा वैद्या [भैषज्यं[16]] कुर्वन्ति[17] इदं

1 C वातवृष्टिशस्यं सम्पत्स्यति

2 B ०ष्यति सर्वे......सत्त्वाः; Tib. ཡུལ་དེ་ན་ གནས་ པའི་ སེམས་ཅན་ ཐམས་ཅད་ཀྱང་།

3 B पोद्य

4 Tib. ཤ་ཟ་མ་རུངས་པས། 5 Tib. གཙེ་བར་མི་འགྱུར་རོ།

6 B च नाशयिष्यन्ति; Tib. མཐོང་བར་ མི་ འགྱུར་རོ།

7 B राजक्षत्रियश्च 8 Tib. omits आरोग्य 9 C ०स्त्राणमुक्तस्यैवमाह

10 Tib. ཡང་ མངོན་ པར་ སྐྱེ། 11 C न त्वया 12 B सति न काल०

13 C आह। न त्वया भदन्तानन्द तथागतस्यान्तिके श्रुतं सन्ति न चाकालमरणानि तेन मन्त्रौ० 14 C गुरुकस्तस्य व्याधिः

15 B किन्तु भैषज्यं च पूजा च निरर्थका

16 Tib. སྨན་དང་ རིམ་གྲོ་ བྱེད་པ་དང་ མི་ ལྡན་ ནམ། ཡང་ན་ སྨན་ པ་སྨན་མ་ ཡིན་པར་ བྱེད་པ།

The Chinese version of Dharmagupta follows the Sanskrit text, but not so much the version of Hiouen Tsiang: (Taisho ed. XIV, p. 404, para 1, ll. 27-28).

17 B निदानं का...

प्रथममकालमरणम् । द्वितीयमकालमरणं यस्य राजदण्डेन कालक्रिया[1] । [तृती]यमकालमरणं येऽतीव प्रमत्ताः प्रमादविहारिणस्तेषां मनुष्या[2] ओजोऽपहरन्ति । चतुर्थमकालमरणं ये अग्निदाहेन कालं कुर्वन्ति । पंचमं चाकालमरणं ये च उदकेन म्रियन्ते[3] । षष्ठमकालमरणं ये [सिंह]व्याघ्रव्याडचण्डमृगमध्यगता वासं कल्पयन्ति च म्रियन्ते[4] । सप्तममकालमरणं ये गिरितटात्[5] प्रपतन्ति । अष्टममकालमरणं ये विष-काखोर्द-वेतालानुप्रयोगेण[6] म्रियन्ते[7]। नवममकालमरणं ये क्षुत्तृषोपहता [आहार]पानमलभमाना [आर्ताः] [8]कालं कुर्वन्ति । एतानि संक्षेपतोऽकालमरणानि[9] तथागतेन निर्दिष्टानि । अन्यानि चाप्रमेयाण्यकालमरणानि[10] ।

अथ खलु[11] तत्र पर्षदि[12] द्वादश महायक्षसेनापतयः सन्निपतिता अभूवन् यदुत किंभीरो[13] नाम[14] महायक्षसेनापतिर्वज्रश्च[15]

1 B ०कृया    2 B मानुषा ओजम० ; C अमनुष्याः ; cf. Chinese, Taisho ed., vol. XIV., p. 404 col, 1, ll. 27-28.

3 B म्रियति ; C मरिष्यन्ति    4 B मरन्ति ; C गता भवन्ति

5 B ०तटे    6 C ०वेतालप्रयोगेण    7 B & C मरन्ति

8 B omits पान ; C omits आर्ताः ; Tib. གང་ དག་ ཟས་ དང་ སྐོམ་ མ་ རྙེད་ནས་ བཀྲེས་ པ་ དང་ སྐོམ་པས་ ཉེན་ཏེ་ འཆི་ བའི་དུས་ བྱེད་ པའོ།

9 B ०माना...तानि पद्मे अकाल० ; C एते संक्षेपेण महन्तश्च अकाल० ; cf. Tib. མདོར་ ན་ འདི་ དག་ནི།

10 C अकालमरणा न च तथागतेन निर्दिष्टाः । अन्ये प्रमेया अकालमरणाः

11 C omits खलु    12 B पर्यायं    13 Tib. ཛི་འཛིགས    14 C omits नाम

15 Tib. རྡོ་རྗེ

नाम[1] महायक्षसेनापतिर्मेखिलो[2] नाम[3] [महा]यक्षसेनापति-रन्तिलो[4] नाम महायक्षसेनापतिरनिलो[5] नाम महायक्ष-सेनापतिः सण्ठिलो[6] नाम[7] महायक्षसेनापतिरिन्द्लो[8] नाम[9] महायक्षसेनापतिः पायिलो[10] नाम[11] महायक्षसेनापतिर्महालो[12] नाम महायक्षसेनापतिश्चिदालो[13] नाम महायक्षसेनापतिश्चौन्धुलो[14] नाम[15] महायक्षसेनापतिः[16] विकलो नाम[17] [महायक्षसेनापतिः]। एते द्वादश महायक्षसेनापतय एकैकानुचरपरिवारिता[18] एक-कण्ठेन[19] भगवन्तमेवमाहुः। श्रुतमस्माभिश्च[20] भगवता बुद्धानुभावेन तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य नामधेयम्। न भूयोऽस्माकं दुर्गतिभयम्। ते[21] वयं सहिताः समग्रा यावज्जीवं बुद्धं

1 C omits नाम    2 Tib. ཀྱུ་འཛིན

3 C omits नाम    4 C अनिलो ; Tib. གཟའ་ འཛིན

5 B सनीलो ; C मनिलो ; Tib. རླུང་=अनिलो 6 Tib. གནས་བཅས=सण्ठल्यो

7 C omits सण्ठलो नाम    8 C इन्दालो ; Tib. དབང་འཛིན་=इन्दलो

9 C omits नाम    10 C पाइलो    11 C omits नाम

12 B ०मेहारो ; C ०मीहुरो ; Tib. བདུང་ འཛིན་    13 Tib. སྨྲ་འཛིན

14 B ०श्चौन्धुरो ; C ०श्चिन्दालो ; Tib. བསམ་ འཛིན་ 15 C omits नाम

16 Two names, not legible in the Ms. B., occur in Tib གཡོ་བ and ཛོགས་བྱེད For reference to महायक्षसेनापति see सुवर्णप्रभाससूत्र (Japanese ed) p. 81.

17 C ०सेनापतिः चौधुरो महा० ; B omits विकलो नाम

18 C ०पतयः एकैकः सप्त सप्त यक्षसहस्रपरिवारः ; Tib. གནོད་ སྦྱིན་ གྱི་སྡེ་ དཔོན་ ཆེན་པོ་བཅུ་གཉིས་པོ་དེ་དག་གོ། གནོད་ སྦྱིན་གྱི་ སྡེ་ དཔོན་ ཆེན་ པོ་ རེ་རེ་ ཡང་ གཡོག་ གནོད་སྦྱིན། 19 C ०वाचेन    20 C श्रुतोऽस्माकं

21 Tib. དེ་ནས་ i. e. ते is used for तस्मात्

शरणं गच्छामो धर्मं शरणं गच्छामः सङ्घं शरणं गच्छामः सर्वसत्त्वानामर्थाय हिताय सुखाय औत्सुक्यं [1]करिष्यामः[2] यो[3] विशेषेण ग्रामे वा नगरे वा जनपदे वा[4] अरण्यायतने वा इदं सूत्रं प्रचारयिष्यति यो वा तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य नामधेयं धारयिष्यति [पूजोप]स्थानं करिष्यति तावत्तं भगवन् सत्त्वं रक्षिष्यामः[5] [[6]परि]पालयिष्यामः सर्वामाङ्गल्याच्च परिमोचयिष्यामः[7] सर्वेषामाशां[8] परिपूरयिष्यामः। अथ खलु भगवांस्तेषां यक्षसेनापतीनां साधुकारमदात्। साधु साधु महायक्षसेनापतयः। यद् यूयं तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य कृतज्ञतामनुस्मरमाणानां सर्वसत्त्वानां हिताय प्रति[पन्नाः]। अथायुष्मानानन्दो[9] भगवन्तमेतदवोचत्[10]। को नामायं भगवन् धर्मपर्यायः कथं चैनं धारयामि। भगवानाह। तेन ह्यानन्द धर्मपर्यायमिदं भैषज्यगुरुवैदूर्यप्रभस्य तथागतस्य पूर्व-

1 Tib. སྐྱིད་ དུ་ སྤྲོ་བར་ བགྱི་འོ། Cf. Suvarṇaprabhāsa, p. 82: औत्सुक्यं करिष्यन्ति  2 B सुखाय अतः ऊत्सुक्यकरणाय च  3 C omits यो

4 B omits जनपदे वा  5 C नामधेयं धारयिष्यति वयमपि ते च रक्षिष्यामः

6 Tib. མཆོད་ པ་དང་ རིམ་གྲོ  7 C रक्षिष्यामः सर्वोपद्रवेभ्यः ; Tib. གནོད་པ་ ཐམས་ཅད་ ལས་ ཡོངས་ སུ་ཐར་ བ་བགྱི།  8 C सर्वाशां

9 Tib. སེམས་ ཅན་ལ་ཕན་ པའི་ཕྱིར་ ཞུགས་པ་ ལེགས་སོ ལེགས་སོ། དེ་ནས་ ཚེ་དང་ ལྡན་པ་ ཀུན་ དགའ་བོ་། The following leaf in Ms. c. is lost.

10 Tib. adds. आसनादुत्थाय एकांसमुत्तरासङ्गं कृत्वा पृथिव्यां दक्षिणजानुमण्डलं प्रतिष्ठाप्य येन भगवान् तेनांजलिं प्रणम्य भगवन्तमेतदवोचत् The Chinese follows the Sanskrit version.

प्रणिधानविशेषविस्तरमिति । धारय [1]द्वादशानां महायक्षसेनापतीनां [प्रणिधानमि]ति[2] नाम धारय । इदमवोचद् भगवान् । आत्तमना मंजुश्रीः कुमारभूत आयुष्मांश्चानन्दस्त्राणमुक्तो बोधिसत्त्वस्ते च बोधिसत्त्वास्ते च महाश्रावकास्ते च राजा[मात्य]-ब्राह्मणगृहपतयः [सर्वावती पर्षत् सदेवमानुषासुरगन्ध]र्वश्च[3] लोको भगवतो भाषित-मभ्यनन्दन् ॥ आर्यभैषज्यगुरुर्नाम महायानसूत्रं समाप्तम् ॥

**देयोऽयं[4] महाश्राद्धोपासकभसन्त्र एन तथा सार्धं च मंतोटि एन सार्धं मंगल-शूरेण तथा सार्धं आर्य देवेन्द्रभूतेन पितुना च कोसि एन सार्धं माता...रि एन । देयधर्मोऽयं महाश्राद्धोपासक श्रीदेव साहि सुरेन्द्रविक्रमादित्यनन्देन तथा शमिदेवि-त्रैलोकदेवि-भट्टारिकया तथा सार्धं विहलि एन ।** Colophon of Ms. B.

**...तथा सार्धं मातापित्रौ परमदुष्करकत्रौ तथा सार्धं सर्वसत्त्वैः सर्वप्राणि-भिर्यदत्र पुण्यां तद भवतु अन्तरज्ञानं चाप्नुयात् तथा सार्धं षुष्किटोकटोशिरिएन सार्धं चालाषुखेन सार्धं भुगवरियेन एन सार्धं कोइलि एन तथा सार्धं माथरि एन तथा सार्धं अन्त्रिश्वरेन तथा सार्धं दिशी एन ।** Colophon of Ms. C.

1 Tib. adds. བྱང་ ཆུབ་ སེམས་དཔའ་ ལག་ན་ རྡོ་རྗེས་ དམ་ བཅས་པ་ ཅེས་བྱ་བར་ ཡང་ བཟུང་ ཤིག ། ལས་ཀྱི་སྒྲིབ་པ་ ཐམས་ཅད་ རྣམ་པར་སྦྱོང་ ཞིང་རེ་བ་ཐམས་ཅད་ ཡོངས་ སུ་རྫོགས་ བཅེས་ བྱ་བར་ ཡང་ བཟུང་ཤིག་ बोधिसत्त्ववज्रपाणिप्रतिज्ञा इत्यपि नाम धारय । सर्वकर्मावरणविशुद्धिसर्वाशापरिपूरणमित्यपि नाम धारय । *These two titles do not appear in either of the two Chinese translations.*

2 Tib. བཅུ་གཉིས་ཀྱིས་དམ་བཅས་པ་ཞེས་བྱ་བར་ ཡང་ བཟང་ཤིག་ In the previous two Tib. extracts དམ་བཅས་པ་ has been restored as प्रणिधान in its ordinary and not the Buddhist technical sense meaning प्रतिज्ञा (resolution). The usual Tib. words for प्रणिधान however is སྨོན་ལམ་ | The Chinese versions support प्रणिधान ।

3 Tib. གསང་ བའི་ བདག་པོ་ ལག་ན་ རྡོ་རྗེ་དང་ ། ཐམས་ཅད་ ལྡན་པའི་ འཁོར་ དེ་ དག་ དང་ ། ལྷ་དང་ མི་དང་ ལྷ་མ་ཡིན་དང ། etc. गुह्यकाधिपतिः वज्रपाणिः च सर्वावती पर्षत् सदेवमानुषासुर० It is not given in the Chinese version.

4 B देवायां

ओं नमः सर्वबुद्धबोधिसत्त्वेभ्यः ॥

एवं मया श्रु[तमेक]समये भगवान् श्रावस्त्यां विहरति स्म करी[रम]ण्डले च[1]। अथ खल्वार्यावलोकितेश्वरो बोधिस[त्त्वो] महासत्त्वोऽनेकविद्याधरकोटीनियुतशतसह[स्रे ण] परिवृतो[2] येन भगवांस्तेनोपसमक्रामत्। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तं प्रदक्षिणीकृत्य[3] [ए]कान्ते न्यसीद[4] भगवन्तमेतदवोचत्। इदं मम भगवन्नेकादशमुखं नाम [5]हृदयमेकादशभिः [कल्पको-][6] टीभिर्भाषितम्। अहं चेत्तर्हि भाषिष्यामि सर्व[सत्त्वाना]मर्थाय हिताय सुखाय[7] सर्वव्याधिप्रश[म]नाय सर्वपापालक्ष्मीदुःस्वप्नप्रति-निवारणाय सर्वाकालमृत्युप्रतिनिवारणाय अप्रसादानां प्रसादनाय सर्वविघ्नविनायकानां[8] प्रशमनाय। ना[हं] भगवन् समनुपश्यामि

1 Tib. (rgyud, XIV, folios 410-413, see Annales du Musée Guimet, V, pp. 434-7) has no corresponding passage. Cf. Dīgha Nikāya, II, p. 1: Ekaṃ samayaṃ Bhagavā Sāvatthiyaṃ viharati Jetavane Kareri-Kūṭikāyaṃ... Kareri-maṇḍala-māḷe.

2 རིག་ སྔགས་ འཆང་ དུ་ མས་ ཡོངས་སུ་ བསྐོར་ ཏེ །

3 བཅོམ་ལྡན་ འདས་ཀྱི་ཞབས་མ ལ་ ལན་ གསུམ་ etc. = भगवतः पादौ त्रिः प्रदच्चिणीकृत्य।

4 འདུག་ སྟེ = निषद्य।

5 སྙིང་ པོ་ གདོང་ བཅུ་ གཅིག་ པ་ ཞེས་ བགྱི་ བ །

6 བྱེ་ བ་ ཕྲག་ བཅུ་ གཅིག་ གིས་ གསུངས་ པ་ ལགས་ ཏེ །

7 སྨན་པ་ Tib. omits हिताय सुखाय।

8 བགེགས་དང་ལོག་ འདྲེན་ རྣམས་ cf. S. Das Tib. Dict., p. 1223.

सदेवके लोके समारके सब्रह्मके सश्रमणब्राह्मणिकायाः प्रजाया यदनेन हृदयेन रक्षे कृते[1] परित्ते[2] परिग्र[हे शा]न्तिस्वस्त्ययने[3] दण्डपरिहरे शस्त्रपरिहरे विष[प्रहा]णे[4] कृते यः कश्चिदतिक्रमे[त्] न प्रशमे[त्] नेदं [स्था]नं विद्यते[5] स्थाप्य पौराणां[6] कर्म विपच्यते। [7]तदस्य च कल्पयतोऽभिश्रद्दधतः सर्वेण सर्वं न भविष्यति[7]। [8]सर्वबुद्धस्तुतः समन्वाहृतोऽयं हृदयं सर्वतथागतानुमोदितोऽयं हृदयम्[8]। स्मराम्यहं भगवन् गङ्गानदीवालुकासमानां कल्पानां परेण [9]शतपद्मनयनचूड-प्रतिहतरङ्गवेल-किरण-[राजस्य] नाम तथागतस्य। मया तथागतस्यान्ति[के] श्रुतमयं हृदयम् उद्गृहीतं [च]।[10] सह प्रतिलंभे[न] दशसु दिक्षु सर्वतथा-

1 སྲུང་བར་བགྱི་བ་

2 ཡོངས་སུ་བསྐྱབ་པ་ = परित्राणे

3 ཞི་བ་དང་བདེ་ལེགས་ འགྱུར་ བར་ བགྱིས་པ་

4 དག་གཞིལ་བ་ བགྱིས་པ

5 यः न...विद्यते=གང་ལ་ལ་ཞིག་འགལ་བར་བགྱིད་པ་དེ་མ་མཆིས་ཏེ །

6 སྔོན་གྱི་ ལས་ཀྱི་རྣམ་པར་སྨིན་པ=पूर्वकर्मणां विपाकः

7 It is not in Tib.

8 སྙིང་པོ་འདི་ ནི་སངས་རྒྱས་བཅོམ་ལྡན་འདས་ཐམས་ཅད་ཀྱིས་བསྟོད་ཅིང་དགོངས་པ་ལགས་སོ་ །

9 སྤྱན་གཙུག་གིས

10 གཅེས་ བདག་ གི་ སྙིང་ པོ་ འདི་ ནི་ དེ་ བཞིན་ གཤེགས་ པ་ ཐམས་ ཅད་ཀྱིས་ རྗེས་སུ་ཐུགས་ རང་སཔར་ མཛད་པ་ ལགས་སོ །

गताः सुमुखीभूता अनुत्पत्तिकधर्मक्षान्तिप्रतिलब्धाः। एवं बहुकरोऽयं हृदयम् तस्मात्तर्हि श्राद्धेन कुलपुत्रेण वा कुलदुहित्रा वा सतकृत्यायं हृदयं साधयितव्यम्। अनन्यमनसा नित्यं साधयितव्यम्। कल्यमुत्थाय अष्टोत्तरवारशतं प्रवर्तयितव्यम्। दृष्टधर्मिका गुणा दश परिग्रही[तव्याः]। कतमे दश। यदुत निर्व्याधिर्भविष्यति। सर्वतथागतैः परिगृहीतश्च भविष्यति। धनधान्यहिरण्या[भर]णमस्य अक्षयं भविष्यति। सर्वशत्रवो वश्या अवमर्दिता भविष्यन्ति। राजसभायां प्रथममालपितव्यं मंस्यति। न विषं न गरं न ज्वरं न शस्त्रं काये क्रमिष्यति। नोदकेन कालं करिष्यति। नाग्निना कालं करिष्यति। नाकालमृत्युना कालञ्च करिष्यति। अपरे चत्वारो गुणानुशंसा उद्ग्रहीष्यति। मरणकाले तथा[गतद]र्शनं भविष्यति। न चापायेषूपपत्स्यते। न [विषमा]परिहारेण कालं करिष्यति। इतश्च्युतः सुखावत्यां लोकधातावुपपत्स्यते।

स्मराम्यहं भगवन्निति दशानां गङ्गानदीवालुकासमानां कल्पानां ततः परेण परतरेण मन्दारवगन्धो नाम तथागतोऽभूत्। तत्र मया [1] गृहपरिभूतेनायमुद्गृहीतम्। चत्वारिंशत् कल्पसहस्राणि संसाराः पश्चान्मुखीकृताः[2]। एष च मया हृदयं प्रवर्तित्वा स[र्वस्मि]न्[3] करुणायनज्ञानगर्भबोधिसत्त्वविमोक्षं

[1] ཁྱིམ་པར་གྱུར་པས་

[2] Ms. कृतानि

[3] ཐམས་ཅད་ཀྱི་སྙིང་རྗེ་འཇུག་པ=करुणायनम्

प्र[तिल]ब्धम् । ये बन्धनबद्धा ये बध्यप्राप्ता ये उदकाग्नि-विविधदुःखाभ्याहताः तदनेनाहं सर्वसत्त्वानां लयनं त्राणं शरणं परायणं भवामि । यत्[1] सर्वदुष्टयक्षराक्षसानामनेन[2] हृदयेन कर्षित्वा मैत्रचित्ता[न्][3] दयाचित्तान् कृत्वानुत्तरायां सम्यक्संबोधौ प्रतिष्ठापयामि । एवं महर्धिकोऽयं[4] मम भगवन् [हृदयम्] एकवेलां प्रकाशित्वा[5] चत्वारो मूलापत्तयः क्ष[यं] गच्छन्ति पञ्चानन्तर्याणि कर्माणि निरवयवं तन्त्रीकरिष्यन्ति । कः पुनर्वादो[6] यथाभाषितं प्रतिपत्स्यन्ति । अनेकबुद्धशतसहस्रावरोपितकुशलमूलं भविष्यति ये श्रोष्यन्ति प्रागेव जपसाधनादिभिः । सर्वमनोरथं परिपूरयिष्यामि यश्च[7] चतुर्दशीपंचदशी[8] मामुद्दिश्य[9] उपवसति । चत्वारिंशत् कल्पसहस्राणि संसारान्[10] पश्चान्मुखीकरिष्यन्ति । तेन ना[मधे]-यमपि ग्रहणेन भगवन् सह सोऽयं बुद्धकोटीनियुत[शतस]हस्रातिरेकसमम् । मम नामधेयग्रहणेन [स]र्वसत्त्वा अवैवर्तिकत्वं प्रसवन्ति । सर्वव्याधिभिः [प]रिमुच्यते । सर्वावरणेभ्यः सर्वभयेभ्यः सर्वकायवाङ्मनोदुश्चरितेभ्यः परिमोक्ष्यन्ते । तेषामेव करतलगता

1 Ms. यः  2 Ms. ०मनया  3 Ms. ०चित्ता

4 Tib. རྫུ་འཕྲུལ་ཆེ་བ

5 ལན་ཅིག་བརྗོད་པས

6 The meaning becomes clear if the words तेषां ये are inserted after पुनर्वादो

7 It would have been beetter if यश्च could be replaced by तेषां ये च

8 In Sanskrit it should be चतुर्दश्यां पञ्चदश्यां

9 བདག་གི་སྐད་དུ  10 Ms. संसारा

बुद्धबोधिर्भविष्यति । भगवानाह । साधु साधु कुलपुत्र यत् सर्व-सत्त्वानामन्तिके एवंरूपा महाकरुणा । शक्ष्यसि त्वं कुलपुत्रः अनेनोपायेन सर्वसत्त्वाना[मनुत्तरा]यां सम्यक्संबोधौ प्रतिष्ठापयितुम् । उद्गृहीतं च [मया] हृदयमनुमोदितम् । भाषध्वं कुलपुत्र । ततः खल्वार्यावलोकितेश्वरो बोधिसत्त्व उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा भगवतश्चरणयोः प्रणिपत्य इदं हृदयमावर्तयति स्म ।

नमो रत्नत्रयाय । नमो वैरोचनाय[1] तथागताय[2] । नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय[3] । नमः अतीतानागतप्रत्युत्प[न्नेभ्यः] सर्वतथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यः ।

ॐ [धर धर । धिरि धिरि][4] । धुरु धुरु । इट्टे विट्टे । चले चले । प्रचले प्रचले । [कुसुमे][5] कुसुमवरे । इलि मिलि विटि[6] स्वाहा । एवं मूलमन्त्रः[7] ॥

नमो रत्नत्रयाय । नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय । तद् यथा हा [हा हा] हा । इमे तिले चिले भिले खिले स्वाहा । स्नानोपस्पर्शनवस्त्राभ्युक्षिपणमन्त्रः सप्तजापेन ।

1 Tib. नम आर्यज्ञानसागरवैरोचनबुद्धराजाय

2 Tib. adds अर्हते सम्यक्संबुद्धाय—नमः सर्वतथागतेभ्यः अर्हद्भ्यः सम्यक्संबुद्धेभ्यः

3 Tib. adds तद्यथा ॐ.

4 Supplied from Tibetan.   5 Supplied from Tibetan.

6 Tib. चितिज्वलमवनय

7 Tib. Tibetan rendering finishes up the text here by a few concluding remarks about the merits of the mantra, mentioning the title at the end.

नमो रत्नत्रयाय। नम आर्यावलोकितेश्वराय बोधिसत्त्वा[य म]हासत्त्वाय। तद्यथा टुरु टुरु हा हा हा हा स्वाहा। धू[पदी-पनिवेदनमन्त्रः।

नमो रत्नत्रयाय। नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय। तद्यथा थिरि थिरि धिरि धिरि स्वाहा। गन्ध-पुष्पोपनिवेदनमन्त्रः।

नमो रत्नत्रयाय। नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय। तद्यथा सादे सादे सिदि सिदि सुदु सुदु स्वाहा। बलिनिवेदनमन्त्र एकविंशतिजापेन।

नमो रत्नत्रयाय। नम आर्यावलोकितेश्वराय [बोधिसत्त्वाय महासत्त्वाय। महाकारुणिकाय। तद्यथा यसि द्वसि चरि हुरु इचुरुः सुरुः मुरुः स्वाहा। होममन्त्रः। अनेन मन्त्रेण ज्ञातीनाष्टै(?) रग्निं प्रज्वाल्य दधिमधुघृताभ्यक्तानामहोरात्रोषितेन एकेन त्रिंशता होमः कार्यः। ततः कर्म समारभेत्।

नमो रत्नत्रयाय नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महा-सत्त्वाय महाकारुणिकाय। तद्यथा इलि मिलि तिलि तिलि हिलि स्वाहा। दीपाबद्ध उदकेन [× ×] [वा] भस्मना वा सप्तजापेन।

नमो रत्नत्रयाय। नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय। तद्यथा पिटि पिटि तिटि तिटि विटि विटि गच्छ गच्छ भगवानार्यावलोकितेश्वर स्वभवनं स्वभवनं स्वाहा। उदके सप्तवारान् परिजप्य चतुर्दिशं क्षिपेत्। आर्यावलो-कितेश्वर गच्छ स्वभवनम्।






Last leaf of *Ekādaśamukhaṃ* and first line of *Hayagrīvavidyā*
(*vide* pp. 40, 43)






Last line of *Hayagrīvavidyā* and the first leaf of another text
(*vide* Intro., p. 62)

# हयग्रीवविद्या

नमो रत्नत्रयाय । नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय । नमः सर्वसत्त्वव्यसनघातिने । नमः सर्वसत्त्वभयप्रशमनकराय । नमः सर्वसत्त्वभयोत्तारणकराय । नमः सर्वविद्याधिगताय । नमः सर्वविद्याविधिगतमूर्तये महाकारुणिकाय । नमो महाविद्याराजप्राप्तये महायोगिने ।

तस्मै नमस्कृत्वा इदमार्यावलोकितेश्वरमुखोद्गीर्णं वज्रधरमहीयं हयग्रीवं नाम परमहृदयमावर्तयिष्यामि [स]र्वकर्मार्थसाधकम् । असह्यं सर्वभूतानां यक्षाणां च [विना]शकम् । अमोघं सर्वकर्मणां विषाणां च नाशकम् । तद्यथा

ॐ तरुल तरुल वि[त]रुल वि[त]रुल सर्वविषघातक ज्वलितविस्फुलिङ्गाट्टहास केसराटोपप्रवृद्धवेग वज्रखुरनिर्घातक चलितवसुधातल निःश्वसितहसितमारुतोत्क्षिप्तधरणीधर परभृतगणसमूहविक्षोभणकर परविद्यासंभक्षणकर सर्वग्राहोत्सादनकर परमशान्तिकर सर्वग्रहप्रशमनकर बुध्य बुध्य धाव धाव च भगवा हयग्रीव खाद खाद प[रमं]त्राम् । रक्ष रक्ष क्षमस्व क्षमस्व स मयाभिहितां मन्त्राम् । सिद्धिं मे दिश [दिश] आविश आविश । घोरपिशाच सर्वग्रहेष्वप्रतिहतो मम वरवज्रदंष्ट्र किं चिरापयसि । इदं दुष्टग्रहं दुष्टसत्त्वं दुष्टपिशाचं वा धुन [धुन विधुन] विधुन कम्प कम्प मथ मथ प्रमथ प्रमथ । तथागताज्ञां पालय बुद्धधर्मसंघानुज्ञातं मे कर्म शीघ्रं

कुरु कुरु मा विलम्ब। हयग्री[वा]य फट् वज्रखुराय फट् वज्रदंष्ट्राय फट् वज्रदंष्ट्रोत्कटभयभैरवाय फट्। परविद्यासंभक्षणाय फट्। परमन्त्रविनाशकाय फट्। सर्वग्रहोत्सादकाय फट्। सर्व-विषघातकाय फट्। सर्वग्रहेष्वप्रतिहताय फट्। वडवामुखाय फट्। सर्वग्रहपिशाचान् मे वशमानय। यावन्तो मम [ये केचित्] अहितैषिणस्तान् सर्वान् वडवामुखेन निकृन्तय फट्। नमो नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय। सिध्यन्तु मम मंत्रपदा हयग्रीवो भगवान् आज्ञा[प]यति स्वाहा।

अयं हयग्रीवविद्या राजा पठितसिद्धः[1] उपचारः आत्मरक्षाजापेन पररक्षा पंचरंगसूत्रम् एकविंशतिग्रन्थयः कृत्वा बन्धितव्यम्। यावजीवं रक्षा कृता भवति। डाइनीग्रहगृहीतस्य प्रतिकृतिं कृत्वा पिण्डशस्त्रेण छेत्तव्या। सर्वपरकृता मंत्राश्छिन्ना भवन्ति सर्वशात्रव-स्तम्भनं मनसा व्यवहारे स्व[-]खम् मुखे कृत्वा विद्या जप्तया उत्तरायाति। स्पृष्टावेशाने[षु] स्नातं शुचिवस्त्रप्रावृतं शुचौ प्रदेशे सुमनसा [सं]बद्धा आवेशये शुक्लवलिर्यथालंभेन। चन्द्रग्रहे सूर्यग्रहे घृतं ताम्रभाजने कृत्वा तावज्जेपद्यावच्चन्द्रो मुक्तो भवति तं घृतं पिबे मेधावी भवति एकेनोद्देशेन श्लोकशतमुद्गृह्णाति। पद्मां जुहे [2]घृतमक्षयं भवति। अथ साधितुमिच्छेत्। चन्दनमयं लोकेश्वर-प्रतिमा कर्तव्या। दक्षिणेनार्यवज्रधरः। वा[मे]नार्यावलोकितेश्वरः

1 It may be read as आज्ञापितः 2 Ms. घत

त्रिमूर्तिः कार्यः। सर्वोपरि वडवामुखः परविद्यासंभक्षणः। तस्याग्रतः अयं हयग्रीव-विद्याराजम् अष्टसहस्रं जपेत्। ततः सर्वकर्माणि कुर्या[त्]। स्पृष्टावेशनं गुग्गुलधूपेन। सततजापेन सर्वकार्यसिद्धिर्भवति। सर्वडाइनी दृष्टमात्रा वशीभवति। भस्मना सर्षपेण उदकेन सप्त जप्तेन रक्षा कर्तव्या। सीमाबन्धः कृतो भवति। सर्वमुद्रामोक्षणम् उदकेन वशीकरणं फलपुष्पाद्यैः। अयं पठितसिद्धः। असाधित एव सर्वकर्मा[णि कु]रुते* ॥०॥

—o—

*The present text corresponds to the Tibetan Bkaḥ-ḥgyur Snarthang ed. rgyud, pha, folios 436-8; Sde-dge ed. rgyud, tcha, folios 225-6). It has been transliterated in Tibetan characters and not translated. The transliteration, however, is so very faulty that it is almost useless for the purpose of correcting our ms. readings. As the Tibetan text differs in many places from ous ms., we have thought it better to reproduce both the readings as they appear in the ms. and the xylograph. Many words in both the readings are unintelligible and we have been constrained to leave them as they are. A comparative study of the two readings, Sanskrit and Tibetan, will indicate how these texts underwent changes at different times.

## अवलोकितेश्वरहयग्रीवधारणी

**नमो रत्नत्रयाय। नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय। नमः सर्वसत्त्वव्यसनघातिने। नमः सर्वसत्त्वव्यसनावहारिणे। नमः सर्वसत्त्वभयोत्तारणाय। नमः सर्वभवप्रशमनकराय। नमः सर्वसत्त्वबोधिचिकित्संकराय। नमः सर्वबन्धनच्छेदनपराय। नमः सर्वदुःखप्रमोक्षणकराय। नमः सर्वान्धकारविधमनकराय। नमः सर्वविद्याराजवशप्राप्तये महायोगयोगीश्वराय।**

**तस्मै[1] नमस्कृत्वा इदमार्यावलोकितेश्वरमुखोद्गीर्णम् ऋषिविददा देव-नाग-यक्ष-राक्षस-शक्र-ब्रह्म-लोकपाल-विष्णु-महेश्वर-नारायण-स्कन्द कुबेरासुरेन्द्र-मातृगण नम-**

1 Xylograph तस्य

स्कृतं [1]वज्रक्षुरमहीयं हयग्रीवब्रह्म परमहृदयमावर्तयिष्यामि। [2]अप्रमेयार्थसाधकम् असह्य[3] सर्वभूतानां सर्वविघ्नविनाशकम्[4]। अमोघं सर्वकर्मणां विषाणाञ्च विनायनम्। तद् यथा।

ॐ तरुल तरुल वितरुल वितरुल सर्वविषघातक सर्वभूतविद्रावक[5] ज्वलितानलविस्फुलिङ्गाट्टहास [6]केसरातोपाप्रवितकाय[7] वज्रक्षुरनिर्गतित चलित-वसुधातल वज्रोद्श्वसत हासित-मरुतक्षतिप्रशमनकर परदुष्टविघ्नान् संभक्षणकर स्वविद्योपदेशकर परमशान्तिकर बुद्ध बुद्ध बोधयामीति।

भगवन् हयग्रीव सर्वविद्याहृदयमावर्तयिष्यामि। खाद खाद महारौद्रमन्त्रेण। रक्ष रक्ष आत्मस्वहितान् मन्त्रेण। सिध्य सिध्य सर्वकर्मसु मे सिद्धे देहि देहि। आवेश आवेश प्रवेश प्रवेश सर्वग्रहेषु अप्रतिहत। धुन धुन विधुन विधुन मथ मथ प्रमथ प्रमथ सर्ववरोपग्रम। कृतकखोर्दो। दुर्लङ्घित मूषिक। विषकर विपद्दंष्ट्र विषचूर्णयो अभिचारविपकरण। सिध्य अञ्जन चक्षुर्मोहन। चित्तविक्षोभणकर। नित्यापरप्रेक्षण त्रासय त्रासय महाबोधिसत्त्व क्रुद्धदंष्ट्रेणेन सर्वभयेभ्यः सत्त्वानां रक्ष रक्ष। मम बुद्धधर्मसंघानुज्ञातं मे कर्म शीघ्रं कुरु कुरु फट्। हयग्रीवाय फट्। वज्रक्षुराय फट्। वज्रदंष्ट्रोत्कटभयभैरवाय फट्। परमन्त्रणनाशनकराय फट्। परदुष्टविघ्नान् संभक्षणकराय फट्। सर्वग्रहोत्सादन[8]-कराय फट्। सर्वग्रहेषु अप्रतिहताय फट्। पटलमुखाय फट्। ये केचित् मम अहितेषिणः कार्ये क्रमन्ति मन्त्रयण यमन्ति जुह्वानति काखोर्दं कुर्वन्ति। तेन सर्वे--णाभिमुखेन वाक्षीहाय फट्। नमः सर्वदुष्टग्रहोत्सादनाय[9] हयग्रीवाय सिध्यन्तु मन्त्रपदैः स्वाहा। ॐ अमितोद्भवाय हुं फट् फट् स्वाहा। ॐ नमो हयाय स्वाहा। ॐ नमो विश्वमूर्तये स्वाहा। नमः सर्वसत्त्वानां सिध्यन्तु मन्त्रपदाय स्वाहा।

1 Xylo. खुर for क्षुर in all places.

2 Xylo. अवप्रमेयार्हसधकं

3 Xylo. अवह्यं अर्वभूतानां

4 Xylo. विनायकं

5 Xylo. विद्रववं

6 Xylo. केशर अतोप्य

7 Xylo. ०कयं

8 Xylo. ०साधन

9 Xylo. ०साधन

# सर्वतथागताधिष्ठान-सत्त्वावलोकन-बुद्धक्षेत्रसन्दर्शन-व्यूहम्






*Sarvatathāgatādhiṣṭhāna-sattvāvalokana-buddhakṣetrasandarśana-vyūhaṃ*
(*vide* p. 50, l. 18—p. 51, l. 4)

# सर्वतथागताधिष्ठान-व्यूहम्

एवं मया श्रुतमेकस्मिन् समये पोतलकपर्वते आर्यावलोकितेश्वरायतने दिव्य-मणिरत्नश्रीइन्द्रनीलमये पुष्पसंस्तृते देवसिंहासने भगवान् सार्धं महता भिक्षुसङ्घेन पञ्चमात्रैर्भिक्षुशतैः सर्वैरर्हद्भिः क्षीणास्रवैश्चेतोवशिताप्राप्तैः सद्धर्मपारंगतैश्च सार्धं बोधिसत्त्वैः सर्वैः महाकरुणाज्ञानप्राप्तैः सर्वैः एकजातिप्रतिबद्धैर्द्विजातिभ्यां च त्रिजातिभिर्दशजातिभिर्विंशतिजातिभिस्त्रिंशज्जातिभिः शतजातिभिर्वा प्रति-बद्धैः सर्वैः अष्टफलप्राप्तैर्दशभूमिस्थितैः तद् यथा आर्यावलोकितेश्वरेण मंजुश्रिया विमलकेतुना रत्नश्रिया वज्रकेतुना विमलप्रभेण चन्द्रनेन अमृतकेतुना एवंप्रमुखैः सप्तशतैः बोधिसत्त्वैः सार्धम् उपासकोपासिकाभिः सर्वैश्च व्याकृतैः समाधिप्राप्तः नानालोकधातुभिः सन्निपतितैः पञ्चसहस्रैः सर्वैः गन्धर्वशतसहस्रैः पूर्वबुद्धपर्युपा-सितैः तथागतप्रातिहार्यदृष्टैः सार्धं सर्वाभिः महायक्षिणीभिः बोधिसत्त्वज्ञानप्रा-प्ताभिः व्याकरणप्राप्ताभिरवैवर्तिकाभिः अनौपम्यया विमलप्रभया च प्रभावत्या भीम-श्रिया यक्षिण्या च एवंप्रमुखाभिरशीत्या महायक्षिणीभिः। शतक्रतुब्रह्मवैश्रवण धृतराष्ट्रविरूढकविरूपाक्षमणिभद्रपुत्रपूर्णभद्राः एतैश्च लोकपालैः सार्धं निषण्णोऽभूत्।

अथ तैः सर्वैस्तथागतं सिंहासननिषण्णं ज्ञात्वा स्वकस्वकैः कुशलमूलैस्तथा-गतं दिव्यालंकारवस्त्रपुष्पमाल्यधूपविलेपनवाद्यशब्देन मानितः पूजितः शतसहस्र-कोटिशः प्रदक्षिणीकृत्य अर्चितश्च। तेन खलु पुनः समयेन भगवान् सर्वसत्त्व-महाकरुणाज्ञानस्थितं नाम समाधिं समापन्नोऽभूत्। तेन समाधिधारणबलेन त्रिसाहस्रमहासाहस्रलोकधातवः आभया अवभासिता अभूवन्। सर्वरूपाणि स्फुटितानि। ये च सत्त्वा जात्यन्धाः चक्षुषा रूपाणि पश्यन्ति स्म। बधिराः श्रोत्रेण शब्दान् शृण्वन्ति स्म। रोगस्पृष्टा विगतरोगा भवन्ति स्म। नग्नाश्च वस्त्रावृता बभूवुः। उन्मत्ताः स्मृतिं प्रतिलभन्ते स्म। हीनकायाः परिपूर्णेन्द्रिया बभूवुः। दरिद्रा धनानि प्रतिलभन्ते स्म। सत्त्वानां यः खलु धनवस्तुभोग-विहीन आसीत् स धनवस्तुभोगसम्पन्नोऽभूत्। सर्वसत्त्वाः सर्वसुखसमर्पिताः सर्वाशापरिपूर्णा अभूवन्। त्रिसाहस्रमहासाहस्रलोकधातौ ये केचित् सत्त्वा अनुशासनधर्मश्रवणाय येन भगवान् तेनांजलिं प्रणम्य उपसंक्रान्ताः। ये सत्त्वाः

देवभूतास्ते सर्वदेवसुखं संप्रहाय बुद्धानुस्मृतिं कृत्वा धर्मश्रवणाय येन भगवान् तेन उपसंक्रान्ताः। ये सत्त्वा मनुष्यभूतास्ते च मनुष्यसुखं परित्यज्य धर्मश्रवणकामाय येन भगवांस्तेन उपसंक्रान्ताः। ये सत्त्वा नागयक्षराक्षसप्रेतपिशाचभूतास्ते बुद्धानुस्मृतिं प्राप्य सर्वसत्त्वेषु मैत्रचित्ता भूत्वा कायचित्तसुखं लब्ध्वा धर्मश्रवणाय येन भगवान् तेनोपसंक्रान्ताः। ये सत्त्वा यमलोके अन्धतमिस्रायां जातास्तेऽपि बुद्धानुभावेन एकक्षणं स्मृतिं लब्ध्वा परस्परं संजानते स्म। ते महातमिस्राभ्यः परिमुक्ता बभूवुः। सर्वे सत्त्वाः परस्परं मैत्रचित्ता बभूवुः। तेषामुपक्लेशाः क्षीणा अभूवन्। तेन खलु समयेन महापृथिवी षड्विकारं प्रकम्पते उन्नमति अवनमति स्म। अथ तस्यां पर्षदि मंजुश्रीकुमारभूतः सन्निषण्णः सन् बोधिसत्त्वं महासत्त्वमार्यावलोकितेश्वरमेतदवोचत्। कुलपुत्र महाबोधिसत्त्वपर्षदि अवभासितायां महापर्षदः पूर्वनिमित्तं परिस्फुटम्। अनेकबोधिसत्त्वकोटिनियुतशतसहस्राणां च व्याकरणं प्रकाटितम्। धर्ममहावाक्यस्य[1] पूर्वनिमित्तं संदृश्यते। कुलपुत्र अनेकानां च बोधिसत्त्वकोटिनियुतशतसहस्राणां सर्वाशापरिपूरि महाज्ञानप्रतिलम्भो भविष्यति। तत् कुलपुत्र सत्त्वानां कारुण्यमुत्पाद्य हिताय सुखाय यावदनुत्तरस्यां सम्यक्संबोधौ प्रतिष्ठापनाय तथागतं परिपृच्छ।

सन्ति कुलपुत्र सत्त्वाः पश्चिमे काले पश्चिमे समये भविष्यन्ति पापकारिणो दरिद्राः कृशा [2]दुर्वर्णशरीरा जराव्याधिपरिपीडिताः परीत्तभोगा अपरिभावितकाया अल्पायुष्का अल्पबुद्धयो रागद्वेषमोहपरिपीडिताः। तेषामर्थाय कुलपुत्र तथागतमध्येषय धर्मदेशनायै तत् ते कृतं भविष्यति दीर्घरात्रं सत्त्वाना[मर्थाय] हिताय सुखाय सर्वव्याधिप्रशमनाय सर्वपापनिवारणाय सर्वपापप्रशमनाय सर्वाशापरिपूरणार्थं यावदनुत्तरपरिनिर्वाणार्थम्।

1 This portion has been restored from the Tibetan. See Kanjur, mDo, Kha, folios 395 pp.; *Asiatic Researches*, XX p. 425.  2 Tib. ཉམ་ཆུང་བ=दुर्बला

## I

अथ आर्यावलोकिश्वरो बोधिसत्त्वो महासत्त्वो दशदिशमवलोक्य [1]गङ्गानदीवालुकासमास्तथागतकोटीर्मनसि कुर्वन् [2]येन भगवांस्तेनांजलिं प्रणम्य त्रिः प्रदक्षिणीकृत्य पंचमण्डलेन प्रणिपत्य भगवन्तमेतदवोचत्। सन्ति भगवन् सत्त्वाः पश्चिमे काले भविष्यन्ति जराव्याधिशोकमृत्यु[दुःख][3]कालमृत्युपरिपीडिताः कृशा दुर्वर्णा अल्पायुष्काः परीत्तभोगा अपरिभावितकायास्ते परस्पराणि मात्सर्यदौःशील्यचित्ततया घातयिष्यन्ति परस्पराणि धनभोगैश्वर्याण्यापहरिष्यन्ति[4] हास्यलास्यनाट्यक्रीडाभिरताः अनित्ये नित्यसंज्ञिनः अशुभे शुभसंज्ञिनः। ते तद्धेतौ तन्निदाना सत्त्वा नानाप्रकारैर्विह[ग]नरकतिर्यग्योनियमलोकेषु चोपपतस्यन्ते। तत् तेषामहं भगवन् अर्थाय हिताय सर्वाशापरिपूरणार्थं यावत् तथागतज्ञानाहरणार्थं बुद्धक्षेत्रोपपत्तये सर्वपापनिवारणार्थं तथागतमध्येष्यामि। भाषस्व भगवन् भाषस्व सुगतो नास्ति तथागतस्य तज्ज्ञानं यदविदितम् अदृष्टम् अश्रुतम् अविज्ञातमेव। बहवो भगवन् बोधिसत्त्वभिक्षुभिक्षुण्युपासकोपासिका देवनागा यक्षगन्धर्वासुरकिन्नराश्च समागता धर्मसांकथ्यं श्रोतुकामाः पूर्वबुद्धपर्युपासिताः सप्रज्ञा जाताः ते निराशीभूता प्रक्रमिष्यन्ति।

अथ ते सर्वे यथा समागताः पर्षत्पंचमण्डलेन प्रणिपत्य एककण्ठेन एवमाहुः। साधु भगवन् भाषस्व भगवन् भाषस्व सुगतः।

1 Ms. ०समानि

2 Ms. अंजलयः

3 Tib. མྱ་ངན་གྱིས་ནོན་པར་གྱུར་པ།

4 Ms. ०पहृष्यन्ति

अथ भगवान् द्विरपि त्रिरपि अध्येषणां विदित्वा दशादिश-मवलोक्य वल्गुमनोज्ञस्वरेणार्यावलोकितेश्वरं बोधिसत्त्वं महासत्त्व-मेतदवोचत्। अस्ति कुलपुत्र सर्वतथागताधिष्ठान-सत्त्वावलोकन-बुद्धक्षेत्रसन्दर्शनव्यूहो नाम समाधिः यो मया पूर्वं प्रथमचित्तोत्-पादमुपादाय श्रुतः। सुकुसुमज्योतिःसन्दर्शनस्य तथागतस्यान्ति-कात् श्रुतः। तत्सहश्रवणादेव तस्य समाधेर्नामधेयस्य नवतीनां सत्त्वकोटीनां तथागतज्ञानप्रतिलम्भोऽभूत्। ते सर्वे च व्याकृता-स्तथागतैर्नानाबुद्धक्षेत्रेषु। मया च कुलपुत्र व्याकरणमनुप्राप्तम्। तत् स्मराम्यहं कुलपुत्र दिव्येन तथागतज्ञानेन[1] [2]त्रिंशत्या तथागत-सहस्रैरयं धर्मपर्यायो भाषितः सत्त्वानामर्थाय। सर्वत्र त्वमेवार्या-वलोकितेश्वर तथगताध्येषकः मंजुश्रियश्च कुमारभूतः। अयं च यथा समागता सर्वबोधिसत्त्वानां पर्षद् भिक्षुभिक्षुण्युपासकोपासिका पर्षद्[3] [एते सर्वे] श्रुत्वा[4] माननां पूजनां कुर्वन्ति स्म। तत-श्चानेकानि[5] सत्त्वकोटीनियुतशतसहस्राणि व्याकरणं प्रतिलभन्ते स्म। बोधिसत्त्वसमाधीनां च लाभिनो भवन्ति। सर्वकामं गताः कृतसर्वाशाः समृध्यन्ते विगतव्याधयः संवृत्ता परिपक्वकुशल-मूलाः सर्वावरणप्रहीणा अभिरूपप्रासादिकदर्शनीया धनधान्य-कोशकोष्ठागारसमृद्धाः [6]सर्वराजराजपुत्रामात्याभिनन्दनीयाः सर्व-

1 Ms. जीतामा ; Tib. ཤེས་ རབ་ དང་ ལྡན་ པའི་ རང་ བཞིན་ ཅན །

2 Ms. तृ for त्रि in all places.

3 Ms. पर्षे for पर्षद् throughout.

4 Ms. श्रोता ; Tib. དག་གིས་ཁྲུང་ཐོས་ནས །

5 Ms. वैंणीनेकानि

6 Ms. राजराजमात्वामात्या-

सत्त्वैर्वन्दनीयाः स्मृतिमन्तः प्रज्ञावन्तः बुद्धे धर्मे संघे अभेद्य[1]-प्रसादेन समन्वागता धृतिमन्तः[2] आयुर्वर्णतेजोबलस्थामवन्तः सर्वाकारवरोपेताः समन्वागताः। न च कदाचित् प्रियविप्रयोगं न प्रियव्यसनं संवृत्तम्। एवं कुलपुत्र बहुगुणसमन्वागतास्ते कुलपुत्रा वा कुलदुहितरश्च भविष्यन्ति। यदा सद्धर्मपर्यायं पंचमण्डलेन प्रणिपत्य पुष्पधूपगन्धमाल्यविलेपनच्छत्रध्वजपताकैः समलंकृत्य नमो बुद्धायेति कृत्वा नमस्करिष्यन्ति साधुकारं दास्यन्ति धारयिष्यन्ति वाचयिष्यन्ति वाचापयिष्यन्ति लिखिष्यन्ति लिखापयिष्यन्ति परमगौरवं चित्तमुत्पाद्य तस्य धर्मभाणकस्यान्तिके[3] ते दृष्ट एव धर्मे सर्वसगुणसमन्वागता भविष्यन्ति अभिरूपाः प्रासादिका दर्शनीया विगतव्याधयो दीर्घायुष्काः स्थिरबुद्धयः स्मृतिमन्तः धृतिमन्तः सर्वराजानां सर्वराज्ञीनां राजपुत्रामात्यानां सर्वशत्रूणां सर्वसत्त्वानां चाभिनन्दनीया भविष्यन्ति वन्दनीयाः सत्करणीयाः। प्रभूतवित्तोपकरणा भविष्यन्ति। चन्दनगन्धः चास्य[4]मुखात् प्रवास्यति। नीलोत्पलसदृशनेत्रो भविष्यति। रात्रिन्दिवं चास्य बुद्धबोधिसत्त्वदर्शनं भविष्यति। सर्वावरणं चास्य क्षयं यास्यन्ति पंचानन्तर्यप्रभृतयः कृत्वा[5]। देवता-

1 Ms. भेद्य; Tib མི་ཕྱེད་པ། Usually the expression is अवेत्य प्रसाद=ཤེས་ནས་ དད་པ །=Pāli aveccappasāda.

2 Tib. རྫུ་འཕྲུལ་ དང་ལྡན་པ=ऋद्धिवन्तः

3 Tib. omits परमगौरवं चित्तमुत्पाद्य तस्य धर्मभाणकस्यान्तिके।

4 Following the ms., अस्य has been retained it should be in the plural.

5 Tib. omits it.

श्चास्य रक्षिष्यन्ति। मरणकाले चास्य बुद्धदर्शनं बोधिसत्त्वदर्शन भविष्यति। न ईर्ष्यालुको न विक्षेपचित्तं कालं करिष्यति। यावच्च्युतः सुखावत्यां लोकधातावुपपद्यते व्याकृतास्ते मया कुलपुत्र संमुखव्याकरणेन। दृष्टोऽहं तैः सत्कृतो मानितः। न तैः संशयमुत्पादयितव्यम्। बोधौ [1]य इमं धर्मपर्यायं धारयिष्यन्ति सत्कृत्य लिखिष्यन्ति लिखापयिष्यन्ति वाचयिष्यन्ति पूजयिष्यन्ति उद्ग्रहीष्यन्ति नामधेयं च श्रोष्यन्ति[2]। बोधिसत्त्व इति[3] स मनसि कृत्वा सत्कर्तव्यः। येनास्य पूर्वकर्मविपाकेनास्य रूपवैकल्यं भोगवैकल्यं बुद्धिवैकल्यं परिभाष्यं[4] च प्रियविप्रयोगं च राज्यक्षोभं च ते अस्य समाधेरनुभावेन श्रवणेन केचिच्छीर्षरोगेण केचिद्धस्तच्छेदेन केचित् कुचेलाभिधारणेन केचित् कायचित्तपीडेन केचित् दुःखसंस्पर्शशय्याकल्पनेन केचित् परिभाष्येण सर्वं तत् कर्मावरणं क्षयं यास्यन्ति। तेन चैवं चित्तमुत्पादयितव्यं पूर्वं मया संसारे संसरद्भिः पापमकुशलं सत्त्वेषु नानाप्रकारमुपचितं तं प्रतिदेशयामि आविष्करोमि न प्रतिच्छादयामि। बुद्धे धर्मे संघे अभेद्यप्रसादचित्तमुत्पादयितव्यम्। ये च तस्य कुलपुत्रस्य कुलदुहितुर्वा छेदभोगफलं[5] संवर्त-

1 Ms. योऽयं

2 Tib. omits the words from योऽयं up to श्रोष्यन्ति and puts there གང་དག་རྣ་ལམ་དུ་ གྲག་པར་གྱུར་པ་དེ་དག་ ཀྱང་ བྱང་ཆུབ་ སེམས་ དཔའ་ ཡིན་པར་ ཡིད་ ལ་བྱས་ལ་ བསྙེན་ བཀུར་བྱའོ། ये स्वप्ने दृष्टा भविष्यन्ति तेऽपि बोधिसत्त्व इति मनसिकृत्वा।

3 Ms. ०सत्त्वोपि

4 But Tib. སྨྲེད་པ་ཆེ་བ།

5 Tib. ལོངས་ སྤྱོད་ ཀྱི་ འབྲས་ བུ་ ཆད་པར། =Sans. भोगफलच्छेदं

नीयं कर्मावरणं भविष्यति बुद्धे वा धर्मे वा संघे वा श्रावकप्रत्येकबुद्धे वा मातापितृभिर्वा[1] [पाप]कर्मकृतमुपचितं[2] भविष्यति तत् सर्वं परिक्षयं यास्यति। महैश्वर्यसमृद्धो भविष्यति। ये च तस्य कुलपुत्रस्य च कुलदुहितुर्वा दुःखनारकवेदनीयं कर्मावरणं भविष्यति प्रियविप्रयोगसंवर्तनीयं जात्यन्धसंवर्तनीयं स्त्रीसंवर्तनीयं [3]द्विव्यंजनसंवर्तनीयं ईर्ष्यामानक्रोधवशेन यमलोकप्रेततिर्यग्योनिसंवर्तनीयं तत् सर्वं परिक्षयं यास्यति। एवं कुलपुत्र सर्वगुणाकरोऽयं समाधेः।

अस्ति कुलपुत्रास्य धर्मपर्यायस्य चिरस्थितिकराः। तेषां च कुलपुत्राणां कुलदुहितॄणां रक्षावरणगुप्तानि। सर्वेषां गुणानां सर्वाशापरिपूरकराणि महाभोगैश्वर्यसुखकराणि [4]सर्वचिन्तितप्रार्थितसमृद्धिकराणि सर्वकर्मक्षयंकराणि सर्वाकालमृत्युदुःस्वप्नसर्वव्याधिप्रशमनकराणि सर्वयुद्धजयंकराणि आयुर्वर्णबलवीर्यस्थामकराणि सर्वयक्षभूतमनुष्यवशंकराणि सर्वज्वरविषादकप्रशमनकराणि यावद्-व्याकरणप्रतिलंभकराणि धारणीमन्त्रपदानि यानि श्रुत्वा धारित्वा वाचित्वा सत्करित्वा लिखित्वा लिखापयित्वा गुप्तये। स ते कुलपुत्रा वा कुलदुहितरश्च सर्वानेतान् गुणान् प्रतिलभन्ते। अथ तस्मिन् समये इयं महापृथिवी षड्विकारमकंपत। सा च यथा समागता पर्षत् तथागतं पुष्पधूपगन्धमाल्यदुष्ययुगैः संच्छाद्य साधुकारमदात्। साधु साधु भगवन् कतमानि तानि मन्त्रपदानि।

1 Tib. སྡིག་པའི་ལས། 2 Ms. ०चित्तं

3 Tib. མཚན་གཉིས་པར་འགྱུར་བ། Ms. दुव्यञ्जन

4 Tib. སམ་པ

नमः सर्वतथागतानाम् तद्यथा बुद्धे सुबुद्धे शुद्धमते। लोके विलोके लोकातिक्रान्ते। सत्त्वावलोकने सर्वतथागताधिष्ठानाधिष्ठिते। सर्वशापरिपूरणे द्युतिन्धरे नरके च पूजिते तथागतज्ञानदद्दे तथागताधिष्ठाने च। सर्वलोकः सुखी भवतु। पूर्वकर्म क्षपय। मम

"नात्सेहं मारपतिशुक्षिणस्य आयषदिक

महाश्राद्धोपासक शुलिवज्रस्य"[1]

रक्षा भवतु सर्वभयेभ्यः तथागताधिष्ठानेन स्वाहा॥

इमानि तानि कुलपुत्राहो मन्त्रपदानि लिंशत्या तथागतसहस्रै र्भाषितानि अधिष्ठितानि मयाप्येतर्हि भाषिता[नि] सर्वसत्त्वानामर्थाय हिताय सुखाय रक्षावरणगुप्तये सर्वव्याधिप्रशमनकराणि बुद्धक्षेत्रोपपत्तये। यः कश्चित् पर्ष एवं जानीयुः कथं नु वयं सर्वानेतान् तथागतभाषितान् गुणान् प्रतिलभेय तेन कल्यमेवोत्थाय सर्वसत्त्वानां दयाचित्तेन करुणाचित्तेन मैत्रचित्तेन ईर्ष्यामानम्रक्षक्रोधपरिवर्जितेन एकाग्रचित्तेन बुद्धस्योदारतरां पूजां[2] कृत्वा दशदिशं सर्वतथागतानां नमस्कृत्वा यथाकामं गुणान् मनसिकृत्य अष्टशतं जप्य पुष्पमेकैकं तथागते देयम्। ततस्तस्य सर्वाशासमृद्धिर्भविष्यति। स्वप्ने च तथागतदर्शनं भविष्यति। यं वरम् इच्छति तं लभते। मरणकाले च तथागतदर्शनं भविष्यति। च्युत्वा सुखावत्यां च लोकधातौ[3] उपपत्स्यते। आयुर्बलवर्णवीर्यसमन्वागतः। सर्वशत्रवश्चास्य वशगामिनो भविष्यन्ति।

1 The name is not a part of the text but is inserted here for the benefit of the donor of the text. See also infra, p. 56

2 Ms. पूंजी

3 Ms. ०धातु

अस्यां[1] खलु पुनर्धारण्यां भाष्यमाणायां षष्टीनां च प्राणिसहस्राणामनुत्पत्तिकेषु धर्मेषु क्षान्तिप्रतिलंभोऽभूत्। सर्वे च सर्व[कर्मा][2]वरणविनिर्मुक्ताः सर्वाभिप्रायपरिपूर्णाः संवृत्ताः।

II

अथ खलु वज्रपाणिर्बोधिसत्त्वो दशादिशं व्यवलोक्य भगवन्तमेतदवोचत्। अस्ति भगवन् अभयतेजं नाम धारणी बोधिसत्त्वानां प्रतिज्ञा या मया अभयव्यूहराजस्य तथागतस्यान्तिकादुद्गृहीता। उद्गृह्य सर्वसत्त्वेभ्यः प्रकाशिता। ततः पुनः[3] भगवन् नाभिजानामि यस्य[4] स्वप्नेऽपि सा धारणी कर्णपुटे निपतितान्तर्गता तस्य स्याच्छरीरे दौर्बल्यं वा क्लेशो वा व्याधिर्वा ज्वरो वा कायशूलं वा चित्तपीडा वा अकालमृत्युर्वा उदकं वा शस्त्रं वा विषं वा गरं वा डाकिनी वा भूतो वा यक्षो वा शत्रवो वा मनुष्या वामनुष्या वा विहेठं वा कर्तुं हिंसां वा विधातुं वा नेदं स्थानं विद्यते। तदनुजानातु भगवन् यदहं बोधिसत्त्वप्रतिज्ञामुद्रां दास्यामि। तेषां धर्मभाणकानां धर्मश्रावणिकानामर्थाय श्रोतॄणां[5] मानयितॄणां पूजयितॄणां धारयितॄणां वाचयितॄणां[6] सर्वाशापरिपूरकराणि।

नमः सर्वबुद्धानाम्[7]। सर्वबोधिसत्त्वानामर्हन्तानाम्। तद्यथा ओम् वज्रधर वज्रधर वज्रकाय वज्रबल वज्रतेज। हुम् हुम्। वज्र-

1 Ms. अस्मिन्   2 Tib. ལས་ཀྱི་སྒྲིབ་པ།   3 Ms. ०र्वेण

4 Ms. यस्य स्या सा ; Tib. གང་གི་རྨི་ལམ་དུ།

5 Ms. श्रोत्रीणां   6 Ms धारयित्रीणां वाचयित्रीणां

7 Tib. सर्वतथागतानाम्

पाणे तथागताज्ञां पालय। स्मर प्रतिज्ञाम्। सर्वव्याधिं सर्वपापानि नाशय। देहि मे यथेप्सितं वरम्। मम

"नात्सेहं मारपति शूल्क्षिणस्य आयषादिक शुलिवज्रस्य"

यं यमेवाभियाचाम[1]स्तं तमेव समृध्यतु। हे हे। तुरु तुरु। आगच्छ आगच्छ। मा विलम्ब। दर्शय वज्रकायं दर्शय[2] वज्रकायम्। बुद्धाधिष्ठानेन स्वाहा।

[3]अस्यां धारण्यां भाष्यमाणायाम् [4]इयं महापृथिवी उन्मज्ज-निमज्जनं करोतु। सर्वे च यक्षराक्षसाः संभ्रान्ताः सर्वे च देवा यावद् मनुष्यामनुष्या विस्मयमापन्नाः साधुकारं प्रददति। साधु साधु महासत्त्वाः। परमसिद्धानि इमानि धारणीमन्त्रपदानि भाषितानि। अथ वज्रपाणिबोधिसत्त्वो भगवन्तमेतदवोचत्। यः कश्चिद् भदन्त भगवन् बोधिसत्त्वभूमिमभिप्रार्थयते धनधान्यभोगैश्वर्यं राज्यं विद्याधरत्वम् आयुर्बलवीर्यदीर्घायुष्कत्वं तेन शुक्लाष्टम्यां श्वेत-चन्दनमयो वज्रधरः कार्यः अट्टहासः[5] सर्वालंकारविभूषितः। सधातुकहृदयं कर्तव्यम्। सधातुकं[6] वज्र[धरं][7] समाश्वासकं विद्या-धरं धूपदह्यमानं शुचिना अहोरात्रोषितेन कार्यम्। ततोऽष्टम्यां[8] पूर्व-

1 Tib. अयमेव अभिप्रायः च मे।   2 Ms. & Tib, दरिशय

3 Ms. अस्मिन्   4 Ms. अयं

5 Tib. ཧ་གད་དུ་ དགོད་ ཅིང་། =अश्वहासं हसित्वा

6 Tib. སྐུ་གདུང་ དང་ བཅས་པ་། धातु=remains of a saint

7 Tib. རྡོ་རྗེ་ འཛིན་པ་ རིག་ སྔགས་ འཆང་ ཡང་ དག་པར་ དབུགས་ འ་བྱིན་པར་=वज्रधरं विद्याधरं समाश्वासकं

8 Tib. དེ་ནས་ ཚེས་ བརྒྱད་ ནས་ ཚེས་བཅོ་ ལྔའི་ བར་དུ།

सेचं कृत्वा शुचे सतथागतस्थाने महता धूपपुष्पगन्धदीपैः पूजां कृत्वा त्रिस्कृत्वा अष्टशातिको जापो दातव्यः। तथागतस्य पूजा कर्तव्या। सर्वतथागतानां नमस्कृत्य चत्वारि पूर्णकुम्भा[नि] स्थाप्य रक्तचन्दनमयं मण्डलं कृत्वा श्वेतवस्त्रप्रावृतेन एकाग्रमानसेन चतुर्दिशे च रसगन्धमद्यपायसवलिं[1] दत्त्वा अष्टशतसुमनःपुष्पैः वज्रपाणिराहर्तव्यः। यावत् पञ्चदशी ततो महानिर्घोषो भविष्यति पृथिवीकम्पश्च रश्मयो निश्चरिष्यन्ति। ततो यथेप्सितं वरं दास्यामि। सर्वकर्माणि सर्वकार्याणि जपितमात्रेण समृद्धिष्यन्ति। विगत-व्याधयो चिरजीवी सर्वपापविवर्जितो भविष्यति। गुणसहस्रं प्रति-लप्स्यते। मरणकाले च बुद्धं पश्यति। अहं च दर्शनं दास्यामि। अथ भगवान् साधुकारमदात्। साधु साधु वज्रपाणे अनति-क्रमणीया इयं मुद्रा। नात्र कांक्षा न विमतिर्न विचिकित्सा कर्तव्या सदेवकेन लोकेन।

III

अथ मंजुश्रीः कुमारभूतो भगवन्तमेतदवोचत्। केनार्थे-नायं भगवन् सर्वतथागताधिष्ठानसत्त्वावलोकनबुद्धक्षेत्रसन्दर्शन-व्यूहो नाम समाधिरुच्यते। भगवानाह। सर्वतथागतानाम-

1 Tib. རོ་དང་ལྡན་པ་དང་དྲི་དང་ལྡན་པ་དང་ སྐེམས་དང་ འོ་ཐུག་གི་གཏོར་མ།

धिष्ठानं सर्वबोधिसत्त्वानाम् अधिष्ठितश्च सर्वसमाधिं सर्वधारणी-मुखानि प्रतिलभते। सर्वसत्त्वानां चित्तचैतसिकसमिंजित-प्रसारितानि प्रजानाति। देवानां नागानां मनुष्याणां यक्षाणां गन्धर्वाणां प्रेतानां तिर्यग्योनिगतानां यामलौकिकानाम् अमी सत्त्वाः पुण्योपगाः सुकृतकरा बुद्धधर्मसंघेषु प्रसादं प्रतिलभन्ते। अमी[1] नरकगामिदुष्कृतगामिपापकारिणः। तेषां सत्त्वानां पापदृष्टिगतानां धर्मं देशयति सर्वपापेभ्यो निवारयति। बुद्धबोधौ प्रतिष्ठापयाति सर्वाभिप्रायं परिपूरयाति। ईर्ष्या-मान-क्रोध-मात्सर्यं विनोदयति। ते च सत्त्वा बुद्धधर्मसंघेषु प्रसादं प्रतिलभ्य बुद्धक्षेत्रेषूपपद्यन्ते। न जातु दुःखमनुभवन्ति न दौर्मनस्यम्। तेनायं कुलपुत्र सर्वतथागताधिष्ठानसत्त्वावलोकनबुद्धक्षेत्रसन्दर्शन-व्यूहो नाम समाधिरुच्यते। यं श्रुत्वा नियतावैवर्तिकभूमिं प्रति-लभन्ते।

[स] आह। केनार्थेन भगवंस्तेषां कुलपुत्राणां व्याकरणं भवति। कियन्तेषां पुण्यस्कन्धं भवति। किं दुष्करचर्या। दुष्करं च भगवन् अर्हत्त्वं प्रागेवानुत्तरा सम्यक्संबोधिः। भगवानाह। यश्च मया कुलपुत्र प्रथमचित्तोत्पादमुपादाय दानशीलक्षान्तिवीर्य-ध्यानप्रज्ञापारमिता परिपूरिता यश्च शिरःकर[2]चरणनयनोत्तमांग-प्रियपुत्रभार्यादुहितृदासदासीपरित्यागः कृतः यश्चास्य धर्म-

1 Ms. अयं　　2 Ms ०करण०

पर्यायस्य पूजनसत्करणलिखनलेखापनवाचनोद्[1]ग्रहणीयः पुण्याभिसंस्कारः परेभ्यः संप्रकाशनीयः पुण्याभिसंस्कारः तेषां च धर्मभाणकानां पूजनसत्करणपुण्याभिसंस्कारः तस्यायं पूर्विमकः पूण्याभिसंस्कारः शततमामपि कलां नोपैति। यश्च मया कुलपुत्र धर्मो भाषितः पर्यावासः तं सर्वं सत्करे गुरुकरे मानये पूजये सत्कृत्य लिखये लिखापये। यश्चायं धर्मपर्यायः लिखे वाचये पूजये संप्रकाशये बहुतरम् इतः पुण्याभिसंस्कारं परिगृहीष्यति। ततस्तथागतो व्याकरोत्यनुत्तरायां सम्यक्संबोधौ। तत् कस्य हेतोः। एवंरूपस्य दुष्करं धर्मपर्यायस्य श्रवणोद्ग्रहण-धारण-पूजन-लिखनम्। ते च सत्त्वाः पापसमाचाराः खाद्यपेयहास्य-नाट्याभिरता अशुभे शुभसंज्ञिनः कामक्रोधव्यापादबहुला असुखे सुखसंज्ञिनः प्रहाराक्रोशतर्जनताडनाभिरता न ज्ञास्यन्ति न मनसि करिष्यन्ति। ते ततः पापकर्मनिदानाज्ञाना[2] अकल्याणमित्रपरि-गृहीता जराव्याधिशोकमृत्युपरिपीडिता मरणकाले परितप्यंन्ते। श्मशानसदृशमंचावलंव्यमानं[3] परस्परं पश्यन्ति न च कुशलचित्त-मुत्पादयिष्यन्ति नाभेद्यप्रसादम्। ते ततश्च्यवित्वा पुनरपि दुःखानि प्रत्यनुभविष्यन्ति। नायं कुलपुत्राकृतकुशलमूलैस्तथा-

1 Ms. ०ग्रहराया

2 Tib. སྡིག་པའི་ ལས་ཀྱི་གཞི་དེ་དང ། མི་ཤེས་པ་དེས་ མི་དགེ་བའི་ བཤེས་ གཉེན་གྱིས་ ཡོངས་སུ་ཟིན་ ཅིང །

3 Ms. ०पलं व्यमानं

गतादर्शाविनो[1] अव्याकरणप्राप्तैः श्रोतुं मानयितुं पूजयितुम् उद्-ग्रहीतुं न लिखितुं न लिखापयितुं न श्रद्धातुं न च तान् धर्म-भाणकान् सत्कर्तुं मानयितुं पूजयितुम् [अपि न शक्यते[2] ।] तथा-गतकृत्यं कुलपुत्र तत्र विषये भविष्यति यत्रायं धर्मपर्यायः प्रचरिष्यति । अथ सा यथा समागता पर्षत् साधुकारमदात् । साधु साधु भगवन् । वयमपि भगवन् धर्मभाणकं धर्मश्रावणिकं तथागतकृत्येन [3]सत्करिष्यामः गुरूकरिष्यामः मानयिष्यामः सर्व-सुखोपधानं चास्योपसंहरिष्यामः । अयं च धर्मपर्यायं वैस्तरिकी-करिष्यामः रक्षिष्यामः येनायं धर्मपर्यायश्चिरस्थितिको भविष्यति । अथ भगवांस्तस्यां वेलायां यथा समागतां पर्षदमवलोक्यैवमाहुः । साधु साधु कुलपुत्र । अहो एवमपि युष्माकं करणीयम् । कायचित्त-निरपेक्षैर्भूत्वा सर्वोपप्लवन-परिभवन-परिभाषण-तर्जन-प्रहाराक्रोश-लभ्यमानम् [अपि] इमं धर्मपर्यायः श्रावयितव्यो लिखितव्यो वाचयितव्यः । तं च धर्मभाणकं धर्मश्रावणिकं सर्वसुखोपधानेन चोपस्थातव्यः । स च विषयः स च द्वीपः स च नगरो रक्षितव्यः सर्वभयोपद्रवोपसर्गोपायासेभ्यः । तस्य च कुलपुत्रस्य कुलदुहितुर्वा सततसमितं समन्वाहर्तव्यम् । अथ भगवांस्तस्यां वेलायामिमा गाथा अभाषत ।

1 for दर्शाविभिः ।

2 Tib. མཆོད་པ་བྱ་བར་ཡང་མི་ནུས་སོ།

3 Ms. puts the verbs in singular number.

श्रृणुत कुलपुत्र अप्रमत्ता
मा पश्चकाले परित्ताप्यु भेष्यथ[1] ।
बुद्धस्य उत्पाद्यु कदाचि लभ्यते
कल्पानकोटीभि शतैः सहस्रैः ॥
गुणाश्च श्रृण्वत्वभिश्रद्दधेत
न दुर्लभा तेषु समाधि भेष्यति ।
कल्पानकोटीन् यथ गङ्गवालिका
यो दानु दद्या द्विपदोत्तमेषु ॥
धनं च धान्यं तथ वस्त्रभूषणं
गन्धं च माल्यं च विलेपनं च ।
यश्चैव सूत्रमभिश्रद्दधित्वा
श्रृणेय वाचेय लिखापयेत ।
न तस्य पुण्यस्य प्रमाणु विद्यते
ता चाप्रमाणं सुगतेन देशितम् ॥
रण्यं च सेवेत सदाप्रमत्तो
ध्यानं च ध्यायेतु सदान्यचित्तः ।
दानं च दद्या प्रियपुत्रधीतरा
हस्तौ च पादौ च परित्यजेत[2] ॥
यथैव सूत्रस्य धरेति कश्चि
अयं ततो पुण्यविशेष्यु प्राप्नुया ।

1 Ms. भेष्यत

2 Ms. हस्तौ च परित्यजेत यथैव । Tib. ལག་པ་ རྐང་པ་ ཡོངས་སུ་ གཏོང་བ་བས་ །

अर्थस्य दाता वरसूत्रमेतत्
सर्वस्यापाया सदा वर्जितास्य ॥
धनस्य धान्यस्य च दायको ह्ययं
गुणाश्च सर्वेऽपि न तस्य दुर्लभाः ।
आयुर्बलं वीर्यु न तस्य दुर्लभं
धारेति सूत्रं य इमं विशुद्धम् ॥
द्रक्ष्यन्ति बुद्धममिताभु नायकं
मयापि स व्याकृतु बुद्धबोधौ ।
न तस्य पापं पि कदाचि विद्यते
सुखावतीं द्रक्ष्यति लोकधातुम् ॥
यं चापि तस्य सद कर्मु भेष्यति
सर्वं क्षयं यास्यति चित्तनीडे ।
कायस्य शूले तथ शीर्षतापे
न तस्य जातु विनिपातु भेष्यति ।
सांदृष्टिकांश्चापि गुणां स लप्स्यते
सर्वं यथा चिन्तितु प्रार्थितं च ॥
तस्माभि तेभि सद भिक्षुभिक्षुणी
उपासकोपासिक राजभिः सदा ।
गुरुगौरवं कृत्वा च धर्मभाणके
यथा नरेन्द्रस्य तथागतस्य[1] ॥

1 Ms. puts these two lines after इदं च सूत्रं...कर्तव्यधारके । The Tibetan rendering has been followed here.

इदं च सूत्रं सद धारितव्यं
　　सत्कारु नित्यं च कर्तव्यधारके ।
गन्धैश्च माल्यैश्च विलेपनैश्च
　　सत्कारु कृत्वा च लिखापयेत ॥
मा पश्चकाले जरव्याधिपीडिता
　　अनेक-आयाससहस्रव्याकुला: ।
नरकेषु तिर्यक्षु[1] परिभ्रमाणाः
　　षण्ढाश्च पण्डाश्च जुगुप्सनीयाः ।
जात्यन्धभूताः कुणपाश्च गन्धिनः
　　संजास्यते नीचकुलेषु स्त्रीषु ॥
ईर्ष्यालुकस्य सद पापचारिणः
　　क्रोधाभिभूतस्य च मत्सरिष्य ।
बुद्धेषु धर्मेषु करित्व गौरवम्
　　इमेषु जातीषूपपद्यतेऽसौ ।
तत्रैव दुःखानि च वेदमाना
　　मा पश्चकाले परिताप्यु[2] भेष्यथ ॥
तस्माभि तेहि सद पूजितस्य
　　यश्चैव धारेत प्रकाशयेत ।
यश्चैव परिभाषणु तस्य कुर्वते
　　जुगुप्सनां ताडनबन्धनञ्च ॥

1 Tib. ཡི་དྭགས་ རྣམས་སུ = प्रेतेषु

2 Ms. भेष्यतः

ममैव तेन परिभाषणा कृता
ममैव सत्कारु करित्व धारके[1] ।
तस्माच्च तैर्हि सद धर्मभाणके
यश्चैव धारेत लिखेत वाचये ।
सत्कारु तैश्च सद नित्यु कुर्या
स्निग्धाश्च वाचो मधुरा भणेत ॥

IV

आर्यावलोकितेश्वरो बोधिसत्त्वो भगवतश्चरणयोर्निपत्य भगवन्तमेतदवोचत् । अनुस्मराम्यहं भगवन् अस्ति व्यवलोकनप्रातिहार्या नाम धारणी या मया पूर्वं ज्ञानकेतुप्रभाकरस्य तथागतस्यान्तिकादुद्गृहीता श्रुता [च] । यां श्रुत्वा मत्वा उद्गृह्य धारयित्वा वाचयित्वा सत्करित्वा लिखित्वा लिखापयित्वा अवैवर्तिकभूमिं प्रतिलभन्ते । सर्वानेतांस्तथागतभाषितान् गुणान् प्रतिलभन्ते । सर्वं चास्य यथाभिप्रायां समृध्यते । सर्वकर्माव[र]णं चास्य क्षयं गच्छति । समाधिं च प्रतिलभते । विगता व्याधयो भवन्ति । बुद्धदर्शनं बोधिसत्त्वदर्शनं भवति । तद् भगवान् साधुकारमदात् । साधु साधु कुलपुत्र प्रवर्तय अधिष्ठितं तथागतेन ।

अथार्यावलोकितेश्वरो बोधिसत्त्वो दशादिशं सर्वतथागतेभ्यो नमस्कृत्य इमानि मन्त्रपदानि भाषते स्म ।

1 Tib. དེ་ནི་ང་ཡང་ཡོངས་སུ་སྨྲོས་པ་ཡིན། 
འཛིན་ལ་པུ་དུད་བྱས་ན་ང་ལཧང་བྱས ॥

नमः सर्वतथागतानां सर्वाशापरिपूरकराणाम् । नम आर्यावलोकितेश्वरस्य बोधिसत्त्वस्य महाकारुणिकस्य । तद्यथा

ह ह ह ह । मम मम । धिरि धिरि । शान्ते प्रशान्ते सर्वपापक्षयंकरे । अवलोकय कारुणिक बोधिचित्तं मनसि कुरु । व्यवलोकय मां स्मर स्मर यत् त्वया पूर्वं सत्याधिष्ठानं कृतम् । तेन सत्येन सर्वाशां मे परिपूरय । बुद्धक्षेत्रं परिशोधय । मा मे कश्चिद् विहेठं करोतु । बुद्धाधिष्ठानेन स्वाहा । तद्यथा

तेजे तेजे महातेजे । यन्मम कायदुश्चरितं वाग्दुश्चरितं मनोदुश्चरितं दारिद्र्यं वा तन्मे क्षपय । आलोकय विलोकय । तथागतदर्शनं चाहमभिकांक्षामि बोधिसत्त्वदर्शनम् । धुधुप ददस्व मे दर्शनम् । सर्वे मे कुशला अभिवर्धन्तु । नमः सर्वतथागतानाम् । नमः अवलोकितेश्वरस्य । स्मर प्रतिज्ञा महासत्त्वाः । सिध्यन्तु मन्त्रपदाः स्वाहा ।

अस्यां धारण्यां भाष्यमाणायां महापृथिवीकंपोऽभूत् महाकिलकिलाशब्दः । दिव्यं च पुष्पवर्षमभिप्रवर्षन् [सर्वः सपर्षत्[1]] साधुकारमदात् । साधु साधु सुभाषितमिदं महासत्त्वेन सर्वसत्त्वानां त्राणार्थं सर्वाशापरिपूरकरम्[2] । रक्ष सर्वभयेभ्यः सर्वकर्मक्षयंकर मरणदुःस्वप्नकान्तारप्रशमन । वयमपि सर्वे भूत्वा धारयिष्यामः सत्करिष्यामः । अवलोकितेश्वर आह । यः कश्चित् कुलपुत्र इमान् गुणानभिकांक्ष[ते] । यथा तथागतेन परिकीर्तितं व्याकरणं मम कांक्ष[ते] । ममापि सम्मुखदर्शनं समाधिलम्भं बुद्धबोधिसत्त्वदर्शनं

1 Tib. ཐམས་ཅད་དང་ ལྡན་པའི་ འཁོར་ 2 Ms. ०कराणि

भोगैश्वर्यलम्भं बुद्धक्षेत्रोपपत्तिं तेन शुक्लपक्षे शुचिना सुस्नातगात्रेण भूत्वा आर्याष्टांगोपवासोपवसितैरष्टम्यामारभ्य शुचौ प्रदेशे बुद्धाधिष्ठिते गन्धपुष्पैर्ध्वजपताकैः पूर्णकुम्भैरभ्यर्च्य स पृथिवीप्रदेशः स च धर्मभाणकः शुचिः सुस्नातगात्रः श्वेतवस्त्रप्रावृतो नानापुष्पमाल्यगन्धैरभ्यर्च्य लिखापयितव्यः सर्वसत्त्वासाधारणानि कुशलमूलानि कृत्वा सर्वसत्त्वमैत्रचित्तेन दयाचित्तेन करुणाचित्तेन तथागतगुरुगौरवं चित्तमुपस्थाप्य तेन दिने दिने लिखता ताव लिखे यावदर्धदिवसम्। अष्टम्यामारभ्य यावत् पञ्चदशीं दिने दिने सैव पूजा कर्तव्या। ततोऽनेनैव विधिना लिखितमात्रेण पञ्चानन्तर्याणि कर्माणि सर्वपापानि चास्य क्षयं यास्यन्ति। कुशलैर्धर्मैर्विवर्धिष्यते। उत्तप्तवीर्यो भविष्यति। सर्वधर्मेषु कायसुखमनुप्राप्स्यति। तनू[1]-भविष्यन्ति राग-द्वेष-मोह-मान-क्रोधाः। तेन लिखापयित्वा पूर्वमुखीं सधातुकां तथागतप्रतिमामवलोकितेश्वरप्रतिमां च सधातुकां स्थाप्य सधातुके चैतायतने पुष्पधूपगन्धैर्दीपैश्च उदारतरा पूजा कर्तव्या। अष्टम्यामारभ्य यावत् पञ्चदशीं सर्वसत्त्वमहाकरुणाचित्तेन भवितव्यम्। [2]शुचिशुक्लभोजिना आर्याष्टांगोपवासोपवसितेन सुहृत्सहायकेन[3] मानक्रोधमात्सर्यपरिवर्जितेन दिने दिने उदारतरां पूजां कृत्वा त्रिसन्ध्यं[4] जापः अष्टशतिको दातव्यः। दीपधूपपुष्पगन्धादि दत्त्वा सुमनःपुष्पाष्टशतैश्च आर्यावलोकितेश्वरप्रतिमा त्रिसन्ध्यमाहर्तव्या।

1 Ms. तन्वी 2 Ms. शुच

3 Tib. has only གྲོགས་པོ་=सहायक

4 Ms. तृसन्ध्यं "; Tib. དུས་གསུམ་དུ་བཟླས་བརྗོད།

वज्रपाणेश्च धूपो दातव्यः। दशदिशमभिनमस्कृत्य पश्चिमेन भीमाया देव्याः पूर्वेणानोपमायाः[1] ऊर्ध्वेन शंखिन्या बलिर्नानारसपायसदध्योदनश्चतुर्दिशं क्षेप्तव्यः। ततस्तस्य न कश्चिद् विक्षेपं करिष्यति। संत्रासो[ऽपि नोत्पद्यते।] नान्यथात्वं चित्तस्य[2]। [3]सर्वेषां चाष्टशतिको जापः अष्टशतसुमनःपुष्पैश्च संचोदनम्। [अने]नैव विधिना पूर्वसेचं कृत्वा ततः पूर्णपञ्चदश्यां चत्वारि पूर्णकुंभा[नि] स्थाप्य धूपचन्दनकुन्दुरुककर्पूरं दत्त्वा दीप[मुखानि][4] चत्वारि नानागन्धध्वजपटपताकासुवर्णरूप्यभाण्डैः तं[5] पृथिवीप्रदेशं समलंकृत्य दधिमधुपायसदध्योदनमन्यानि च यथालम्भेन बलिं चतुर्दिशे दत्त्वा निवेद्य सुमनःपुष्पाष्टकशतैरेकैकं जप्य चतुर्दिशे क्षेप्तव्यम्। पूर्ववत् त्र्यष्टशतैः सुमनोजातिपुष्पैरेकैकं जप्य आर्यावलोकितेश्वरप्रतिमा आहर्तव्या। ततः सत्प्रतिमा कंपिष्यति[6]। महानिर्घोषो भविष्यति। रश्मयो निश्चरिष्यन्ति। पृथिवीकम्पः [भविष्यति।][7] ततः सर्वकर्माणि सर्वकार्याणि चास्य समृद्धिष्यन्ति। तथागतदर्शनं बोधिसत्त्वभूमिप्रतिलम्भः सर्वसत्त्ववन्दनीयो भविष्यति। धनधान्यकोशकोष्ठागारसमृद्धः सर्वव्याधिपरिवर्जित-

1 Ms. पम्याः

2 Tib. དེ་ནས་ དེ་ལ་ ཉམ་པར་ གཡེང་བ་དང་ འཇིགས་པ (ततस्तस्य विक्षेपः संत्रासः) དཀའ་ཡང་འབྱུང་བར་མི་འགྱུར་ཞིང་སེམས་འཁྲུལ་ (नोत्पादयितव्यः चित्तविभ्रमः) པར་མི་འགྱུར་རོ། (न कर्तव्यः)।

3 Ms. सर्वेषाणां 4 Tib. མར་མེ་ཁ་བཞི། 5 Ms. स

6 Tib. འགུལ་བར་འགྱུར་ ཞིང་། 7 Tib. ས་འདར་གཡོ་བར་འགྱུར་རོ།

श्चिरजीवी [भविष्यति] । सर्वशत्रवः सर्वराजराजपुत्रामात्यदर्शनाभि-कांक्षिणो भविष्यन्ति प्रियंकराः[1] सर्वक्लेशरागद्वेषमोहप्रहीणाः । न च जातु प्रियविप्रयोगो भविष्यति । महादृढबलवीर्यसंपन्नस्तेजवां-स्तीक्ष्णेन्द्रियो बुद्धिमान् सर्वसत्त्वदयाचित्तो धर्मज्ञो यावच्च्यवन काले बुद्धं भगवन्तमार्यावलोकितेश्वरं पश्यति । मैत्रविहारी कालं करोति । धर्मं देशयमानं यथेप्सितेषु बुद्धक्षेत्रेषु महाचक्रवर्तिकुलेषु यत्रानुस्मृतिं करोति तत्रोपपद्यते । अन्यानि चानेकानि गुण-सहस्राणि प्रतिलप्स्यते । एवं भगवन् बहुगुणकरोऽयं धर्मपर्यायः । इमानि ते धारणीमन्त्रपदानि न विना तथागताधिष्ठानस्यायं धर्म-पर्यायं शक्यं श्रोतुं न धारयितुं न पूजयितुं न लिखितुं न लिखा-यितुं न श्रद्धातुम् । सचे दर्शनं भवे न श्रवं भविष्यति । स-चे श्रवणं तद्विक्षिप्तचित्तः श्रोष्यति न श्रद्धास्यति न सत्करिष्यति । सचे [2]सत्करे क्लेशव्यापादचित्तः [ सत्करिष्यति ] सचे लिखे लिखापयेत व्याक्षिप्तचित्तः । [तत् कस्य हेतोः] । तथा हि तस्य पूर्वपापकर्मफलहेतुत्वात कर्मानुभवितव्यम् । स विचिकित्सा-प्राप्तो भविष्यति । पंचानन्तर्यं करिष्यति । त्रिभिः साधनैः सर्वाशा-समृद्धिर्भविष्यति । नात्र कांक्षा न विमतिर्न विचिकित्सोत्पादयि-तव्या । अथ भगवान् [अवलोकितेश्वराय बोधिसत्त्वाय महा-सत्त्वाय] साधुकारमदात् । साधु साधु कुलपुत्र । तथागतकृत्यमयं[3] धर्मपर्यायः करिष्यति सर्वसत्त्वानाम् ।

1 Ms. किं कर ; Tib. གཅེས་སྤྲོས་བྱེད་པར་ཡང་འགྱུར། । प्रिय

2 Ms. सत्करेत　　3 Ms. कृत्योऽयं

V

अथ खल्वनोपमा महायक्षिणी येन भगवांस्तेनोपसमक्रामत् । भगवन्तं नानापुष्पदुष्ययुगैराच्छाद्य भगवतः पादयोर्निपत्य भगवन्तमेतदवोचत् । एवं स्मराम्यहं भगवन्मया भगवतः कौशाम्ब्यां घोषिलस्यारामे[1] विहरतः[2] पुरतः प्रतिज्ञा समुदाहृता सर्वसत्त्वानामर्थाय । अहमपि भगवन् सर्वविद्याधराणां हृदयं जानामि । तन्मे भगवाननुजानातु बहुजनहिताय बहुजनसुखाय सर्वाशापरिपूरणार्थाय भिक्षुभिक्षुण्युपासकोपासिकानां च ।

नमः सर्वतथागतानां संय्यथीद्[3] ह ह । ही ही । हु हु । सर सर । लहुं लहुं । शीघ्रं शीघ्रं । महाविद्ये सर्वविद्याधरनमस्कृते । हसः हसः । किं तिष्ठसि किं तिष्ठसि । कनकविचित्राभरणविभूषितांगि पट पट । भर भर । भिरि भिरि । भूरु भूरु । सर्वार्थं मे साधय । तुरु तुरु । अर्थं साधय[4] । अर्थं देहि मे

"नात्सहं मारपति शूल्क्षिणस्य[5]" ।

[सर्वसङ्घानां[6]] सिद्धिं हा हा । पद्मे पद्मे महापद्मे । विशदे विशदे महाविशदे । भव भव भवोद्भवाय । तमहं घोरे तमहं घोरे ।

1 Tib. དབྱངས་ངན་གྱི་ཀུན་དགའ་ར་བ་ན།

2 Ms. विहरणातः

3 The usual from is तद्यथेदं ; in Pāli it is सेय्यथीदं ; in Tib. it is transliterated thus स्यद्यथीदं

4 Ms. साधयार्थां साधयार्थां

5 The words within quotations are inserted here for the benefit of the donor of the ms.

6 Supplied from Tib.

तन्मे विद्यां प्रयोजय[1]। सिद्धिं कुरु। सर्वाशां मे परिपूरय बुद्धाधिष्ठानेन स्वाहा।

यः कश्चिद्भगवद्गुणार्थी धनधान्यार्थी सर्वसत्त्ववशीकरणार्थी भवे महैश्वर्यं[2] राजत्वं विद्याधरत्वमभिकांक्ष[ते] ममापि संमुखदर्शनं तेन अष्टम्यां शुक्लपक्षे नवे पटके अच्छिन्नदशे[3] केशापगते[4] शुचिना चित्रकरेण आर्याष्टाङ्गोपवासोपवसितेन अश्लेषैरङ्गै[5]र्नव-भाजनस्थै[6]श्चित्रापयितव्यम्। मध्ये तथागतप्रतिमा धर्मं देशयमाना दक्षिणेनार्यवज्रक्रोधो वज्रं भ्रामयमानः सर्वालङ्कारविभूषितः [पुष्प]-माल्यार्धचन्द्रहारः श्वेतवस्त्रप्रावृतः वामपार्श्वे अनोपमा शरकाण्ड-गौरी[7] सर्वालंकारविभूषिता श्वेतवस्त्रा पद्महस्ता समाश्वासयंती। ततः शुचिना विद्याधरेण आर्याष्टाङ्गोपवसितेन शुचौ सधातुके तथागतस्थाने क्षीरयावकाहारेण श्वेतवस्त्रप्रावृतेनात्मद्वितीयेन अष्टम्यां पूर्वसेवं कृत्वा नानापुष्पगन्धधूपदीपैः पूजां कृत्वा त्रिष्कृत्वा त्र्यष्टशतिको जापो दातव्यः। एकैकं सुमनःपुष्पं जाप्य त्र्यष्टशतैः सा प्रतिमा आहर्तव्या तथागतस्य वज्रपाणेश्च पूर्वतरं पुष्पधूपगन्धं दातव्यम्। बलिपायसदध्योदनं नानारसं नाना=

1 Tib. पयोचनय

2 Ms. महानैश्वर्य

3 Tib. སར་བ་ཁ་ཚར་མ =with fringes uncut; cf. Pāli अदसकं निसीदनम्।

4 Tib. བསྐམ་པ་སྐྲ་བསལ་བ་ལ །

5 Tib. ཚོན་ཅི་སྒྲིན་དང་མ་འབགས་པ །=coloured by various pure colours.

6 Ms. भाजनैस्थै

7 Tib. འདམ་བུ་མདའ་རྒྱུའི་མདོག་ལྟར་དཀར་ཤམ་དུ་མཆིས་ལ །

मर्घं चतुर्दिशो क्षेप्तव्यम्। पूर्णपञ्चदश्यामनेनैव विधिना बलिः अन्या[नि] च यथालाभेन धूपकर्पूरकुन्दुरुक[1]चन्दनम्रक्षं[2] दातव्यम्। सुगन्धतैलेन द्वौ दीपौ दातव्यौ। तत्राहं स्वरूपेणोपतिष्ठामि[3]। यथेप्सितं वरं दास्यामि [4]समाधिलाभमाकाशगमनमन्तर्धानं राजत्वं[5] बल-चक्रवर्तित्वं विद्याधरत्वं निधिवादं धातुवादं परचित्त-ज्ञानं दीर्घायुष्कत्वम्। सर्वसत्त्वानां मैत्रचित्तेन भवितव्यम्। मान-क्रोधधेर्ष्यामात्सर्यपरिवर्जितेन[6] स्तौपिक-धार्मिक-सांघिकार्थापहार-परिवर्जितेन भावितव्यम्। तथागतानामभेद्यप्रसादेन [भवितव्यम्]। यदि चाहं भगवन् पञ्चानन्तर्यं[7] करिष्यामि त्रिभिः साधनैर्न समन्वा-हेरयं मा चाहं भगवन्ननुत्तरां सम्यक्संबोधिमभिसंबुध्येयं सचे बुद्धे अप्रसादलब्धो भवे यश्च विमतिप्राप्तो यश्च पापमकुशलं कृत्वा न विरतिमनुगृह्णाति [8]क्लेशोपक्लेशचित्तस्तस्याहं चापि दर्शनं दास्यामि [9]लाभमपि [10]करिष्यामि।

अथ भगवान् साधुकारमदात्। साधु साधु भगिनि। साधु खलु पुनस्त्वं भगिनि यत्त्वया सर्वसत्त्वानामर्थाय पापसमाचारेषु

1 Ms. कन्दुरक ; Tib. དཀར་དཀར་པོ། 2 Ms. ०स्मृत्तं

3 See infra, p. 77 4 Ms. ०लंभः 5 Ms. राज्यत्वं

6 Ms. स्थोपिक

7 Tib. omits पञ्च, cf. གལ་ཏེ་མཚམས་མ་མཆིས་པ།

8 Ms. क्लेशुप०

9 Ms. न दास्यामि but the Tib. omits न। Cf. དེ་དག་ལ་འང་བདག་མཐོང་བ་སྟེལ་བར་བགྱི་ཞིང་ཐོབ་པར་ཡང་བགྱི་ལགས་སོ།

10 Ms. लाभं करिष्यामि।

सत्त्वेषु इमा एवंरूपा मन्त्रपदा भाषिताः प्रतिज्ञा कृता। शक्ष्यसि त्वमनया एवंरूपया महाकरुणया सर्वसत्त्वाननुत्तरायां सम्यक्संबोधौ प्रति[ष्ठा]पयितुम्। एवमेव त्वयापि करणीयम्।

अथ शंखिनी महादेवी भगवन्तं नानापुष्पैर्नानागन्धै-रभ्यर्च्य प्रदक्षिणीकृत्य पादयोर्निपत्य भगवन्तमेतदवोचत्। अहमपि भगवंस्तथागताधिष्ठानेन प्रतिज्ञां करिष्यामि तथागतशासन-च्चिरस्थित्यर्थम्। तेषां च धर्मभाणकानां धर्मश्रावणिकानां सर्वाशा-परिपूरकराणि मन्त्रपदानि दास्यामि। रक्षायै तन्मे भगवान् अनुजानातु।

नमो नमः सर्वतथागतानाम्। ॐ शंखिनि देवि आगच्छ आगच्छ। तिष्ठ धने धनजये। वृ वृ वृद्धिकरि[1]। धृ धृ धृतिकरि। [2]नानाविविधवेशवस्त्रायुधधारिणि[3]। यु यु आयुष्पालनि। तथा-गतानां स्मर बोधिचित्तं मा विलम्ब। देहि मे वरम्। शंखिनि स्वाहा।

इमैर्मन्त्रपदैः स भगवन् कायगतैर्यशोवृद्धिमनुप्राप्स्यति। तेजोवृद्धिं भोगवृद्धिम् ऐश्वर्यवृद्धिं दीर्घायुष्कतां शत्रुवशीकरण-वृद्धिमनुप्राप्स्यति। अष्टशतजप्तेन यथालाभेन बलिं दत्त्वा चतुर्दिशे धूपं कुन्दुरुकं तथागतस्योदारतरपूजा कर्तव्या। दीपो

1 Tib. व्रि व्रि व्रितकरि

2 Tib. नानावविविध०

3 Tib. ०विध वशवस्त ध धारिणि

दातव्यः। एकविंशतिदिवसानि मैत्राविहारिणा नियमस्थेन भवितव्यम्। ततः सर्वाभिप्रायं परिपूरयिष्यामि सद्धर्मप्रतिक्षेपकं स्थाप्य। शुचौ प्रदेशे कर्तव्यं देवायतने वा[1]। अथ भगवान् सा च यथासमागता पर्ष साधुकारमदात्। साधु साधु भगिनि। सुभाषितमिदम्। प्रतिज्ञा बहुगुणसमन्वागता। एवमेव त्वमपि करणीयमनागतेऽध्वानि।

VI

अथ खलु भीमा महादेवी सुवर्णपुष्पैर्भगवन्तमभ्यर्च्य भगवतश्चरणयोर्निपत्य भगवन्तमेतदवोचत्। अहमपि भगवंस्तेषां धर्मभाणकानां धर्मश्रावणिकानां तेषां च लेखकानां तेषां च धारकाणां वाचकानां पूजकानामर्थाय सर्वाशापरिपूरकराणि हिरण्यमणिमुक्ता[2] भोगैश्वर्यराजत्वदीर्घायुष्कराणि[3] शत्रुवशीकरणानि मन्त्रपदानि दास्यामि। यः कश्चि राजा वा राज्ञी वा भिक्षुभिक्षुण्युपासकोपासिका वा धारयिष्यन्ति सत्करिष्यन्ति लिखिष्यन्ति लिखापयिष्यन्ति तथागतगुरुगौरवेण प्रतिप्रत्त्या यथोपदिष्टाः प्रतिपत्स्यन्ते तस्याहं भगवन् रक्षिष्यामि परिपालनं करिष्यामि यथोच्चितं वरं दास्यामि भोगैश्वर्यैरवैकल्यं करिष्यामि विवादयुद्धडिम्बडमरे जयं करिष्यामि। आयुःसंपदमुपसंहरि-

1 Tib. places the words शुचौ प्रदेशे देवायतने वा before चतुर्दिशे। And अष्टशतजप्तेन after नियमस्थेन।  2 Ms. ०मुक्ति०  3 Ms. ०राज्यत्वा०

ष्यामि। तस्य च विषयस्य नगरस्य परिपालनं करिष्यामि[1]। तन्मे भगवाननुजानातु।

नमः सर्वतथागतानां सर्वबोधिसत्त्वानाम् आर्यावलोकितेश्वर-वज्रपाणिप्रभृतीनाम्।

ॐ महादेवि भीमे भीममते। जये जयावहे। यशजवे तेजजवे। व्याकरणप्राप्ते सर्वसत्त्वावलोकने कृपतेजबहुले तथा-गतानुज्ञातं पालय। स्मर प्रतिज्ञाम्। बुद्धाधिष्ठानेन देहि मे वरम्। सिद्धिं कुरु। देवि महादेवि सत्यवचनदेवि भीमे सत्यवचनप्रतिष्ठिते गुह्यनिवासिनि स्वाहा[2]।

इमानि तानि भगवन् मन्त्रपदानि तथागताधिष्ठितानि तथा-गतानुज्ञातानि मया भाषितानि सत्त्वानामर्थाय। यं यमेव [3]कामं मनसिकृत्वा जपिष्यते तथागतस्य पुरतः पुष्पधूपगन्धदीपैः पूजां कृत्वा पायसरसबलिं चतुर्दिशे दत्त्वा तं तमेव अष्टशतजापेन सर्वाशां परिपूरयिष्यामि[4]। यः कश्चि मां स्वरूपेणाभिकांक्षी भवे तेन अच्छिन्नदशे[5] केशापगते अश्लेषैरङ्गैर्नवभाजनस्थैरष्टम्याम् आर्या-ष्टांगपरिगृहीतेन चित्रकरेण चित्रापयितव्या शरकाण्डगौरी सर्वा-लंकारविभूषितांगी श्वेतवस्त्रा मध्ये तथागतप्रतिमा[6] ध[र्मं देश]यमाना दक्षिणेनार्यावलोकितेश्वरः सांकथ्यं कुर्वन् वामपार्श्वे भीमा महादेवी

1 In the ms. all the verbs of the preceding lines are in plural.

2 The Tib. repeats here, perhaps by mistake, the mantra given above (p. 74) and omits the preceding 7 lines (See sNarthang ed., folio 417b.)

3 Ms. कामं गमं

4 Ms. ०ष्याम

5 See ante, p. 71 fn. 6

6 Cf. above, p. 72

कुण्डिगनेतृक[1]परिगृहीता समाश्वासयन्ती । ततोऽष्टम्यां पूर्वसेवां कृत्वा पुष्पधूपगन्धमाल्यविलेपनैः सधातुके चैत्यस्थाने बलिपायस-दध्योदनं चतुर्दिशे यावत् पूर्णपञ्चदशीं[2] शुचिना विद्याधरेण उदार-तरां पुष्पधूपगन्धदीपैः पूजां कृत्वा बलिं दत्त्वा नानारसैरन्यानि च यथालाभेन शुक्लबलिं दत्त्वा सर्वसत्त्वानां मैत्रचित्तेन दया-चित्तेन भूत्वा जातीपुष्पा[णाम]ष्टभिः शतैः सा प्रतिमा आहर्तव्या । एकैकं जप्य तत्राहं स्वरूपेणोपतिष्ठिष्यामि[3] यथेप्सितं वरं दास्यामि राज्यैश्वर्यम् आकाशगमनं निधिवादं धातुवादं विद्याधरत्वम् अन्यानि च यथेप्सितानि कर्माणि करिष्यामि अकालमृत्यु-प्रतिषेधनं सर्वरोग-प्रशमनं परचक्रप्रमर्दनं पुत्रलम्भम् अर्थागमनं प्रीतिं सर्वसत्त्वेषु । यदि चाहं भगवन् पञ्चानन्तर्यं करिष्यामि न सर्वाशां परिपूरयेयं मा चाहं भगवन्ननुत्तरां सम्यक्संबोधिमभिसंबुध्येयं सद्धर्म-प्रतिक्षेपकं स्थाप्य यश्च विचिकित्साप्राप्तो बुद्धधर्मसंघे[4] । भगवानाह । साधु साधु भगिनि साधु खलु पुनस्त्वं भगिनि [5]यत्त्वं सर्वसत्त्वानां हिताय सुखाय [6]प्रतिपन्ना अस्यैव च धर्मपर्यायस्य चिरस्थित्यर्थं

1 Tib. ལྷ་མོ་ཆེན་མོ་འཇིགས་བྱེད་མ་འདམ་བུ་མདའ་རྒྱུའི་མདོག་ལྟར་དཀར་ཞམ་དུ་མཆིས་ལ། རད་པ་དཀར་པོ་འཆལ་བ། རྒྱན་ཐམས་ཅད་ཀྱིས་བརྒྱན་པ། རིལ་བ་དང་བསྐྱང་སྲེང་ཕྲོགས་ཤིང་ཡང་དག་པར་དབུགས་འབྱིན་པ།=महादेवी भयङ्करी शरकाण्डगौरी सर्वालंकार-विभूषिता कुण्डिकनेतृकपरिगृहीता समाश्वासयन्ती ॥

2 Ms. ०दश्यां

3 See ante, p. 73.

4 Tib. puts the words सद्धर्मप्रतिक्षेपको...संघे before यदि चाहं ।

5 Ms. यस्त्वं

6 Ms. प्रतिपन्नः

प्रतिपन्ना । तेन हि भगिनि नित्यमेव इमाः प्रतिज्ञास्त्वया नित्यमेव समन्वाहर्तव्याः । अथेयं महापृथिवी तस्मिन् समये प्रचचाल दिव्यञ्च कुसुमवर्षमभिप्रावर्षत् । सा च सर्वावती पर्षत् साधुकार-मदात् । साधु साधु सुभाषितमिदम् । प्रतिज्ञा सर्वसत्त्वानां सर्वाशापरिपूरिका[1] भविष्यति ।

VII

अथार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः पुनर्भगवन्त-मेतदवोचत् । किं पुनर्भगवन् स कुलपुत्रो वा कुलदुहिता वा लिखन-वाचन-लिखापन-संप्रकाशन-पठन-स्वाध्ययन-पूजनसंप्रका-शनया पुण्यमनुप्राप्स्यति इमस्य धर्मपर्यायस्य । भगवानाह । तेन हि [2]त्वामेवार्यावलोकितेश्वर परिप्रक्ष्यामि यथा ते क्षमं तथा व्याकुरु । अवलोकितेश्वर आह । भगवानेव व्याकुरुतां नास्ति तथागतस्य अदृष्टं वा अश्रुतं वा अविज्ञातं वा । भगवानाह । यश्च कुलपुत्र अस्य धर्मपर्यायस्य लिखन-लिखापन-वाचन-पूजन-संप्रकाशन-पठन-स्वाध्ययनात् पुण्यमनुप्राप्स्यति स उपमेनापि न शक्यं वर्णयि-तुम् । तत् कस्य हेतोः । सर्वसत्त्वानां यथाभिप्रायपरिपूरकम् । दानं दत्त्वा ते सत्त्वा अपरिमुक्ता एव[3] भवन्ति जरा-व्याधि-मरण-शोक-परिदेव-दुःख-दौर्मनस्योपायासेभ्यः । वर्षशतसहस्रं पञ्चभिः कामगुणैः क्रीडापयित्वा अपरिमुक्ता एव ते सत्त्वा भवन्ति नरकतिर्यग्योनि-यमलोकप्रेतविषयेषु पुनरपि दुःखान्यनुभवन्ति । अस्य धर्मपर्यायस्य श्रवणं सत्त्वेभ्यः कृत्वा पूजनं संप्रकाशनं [च]कृत्वा अर्थं चास्यावश्रुत्य

1 Ms. ०रको 2 Ms. त्वमे० 3 Ms. अपरिमुक्त एव

प्रतिपत्त्या प्रतिपद्य परिमुक्ता एव भवन्ति जातिजराव्याधि-मरण-शोक-परिदेव-दुःख-दौर्मनस्योपायासेभ्यः सर्वनरकतिर्यग्योनियमलोकेभ्यः। तस्मात् तथागत अयं पुण्यस्कन्ध उपमेनापि प्रमाणं न कुर्वन्ति। यश्च कुलपुत्र अस्य च धर्मपर्यायस्योद्दिश्य सर्षपफलमात्रकं[1] च हिरण्यस्य एकपुष्पं वा एकफलं[2] वा एकपताकां वा वाद्यं वा गन्धं वा वस्त्रं वा आसनं वा आभरणं वा परित्यजे लिखे लिखापये धारये वाचये पूजये सत्करे[3] परेभ्यश्च विस्तरेण संप्रकाशये तं च धर्मभाणकं वाचये पूजये यश्च तिष्ठते तथागते संमुखपूजया सपर्ष पूजये मानये सर्वसुखोपधानेन वर्षशतसहस्रमुपतिष्ठे गन्धमाल्यविलेपनै-र्ध्वजपताकाभिर्विहारचंक्रमोद्यानं कारापये अर्धयोजनोच्छ्रितं सप्त-रत्नमयं स्तूपं कारये शतं वा सहस्रं वा तथागत [मुद्दिश्य]तांश्च दिव्यपूजया पूजये[4] वर्षशतसहस्रम् अयं च ततो बहुतरपुण्य-संस्कारं स्या। अस्य धर्मपर्यायस्य लिखन-लिखापन-धारण-पठन-पूजन-संप्रकाशनया न इमां तथागतसंमुखपूजां न त्वेव सत्त्वेभ्यो दानं दत्त्वा पञ्चभिः कामगुणः क्रीडापयित्वा। तस्मात्तर्हि तैश्च कुलपुत्रैः कुलदुहितृभिर्वा राजराजपुत्रमहामात्रामात्यैर्वा [5]सततसमितमयं धर्म-पर्यायः पूजयितव्यः। तथागतसंज्ञा एवोत्पादयितव्या। तेषां कल्याणमित्राणां य इमं धर्मपर्यायं श्रावयति कथयति अर्थं चास्योप-संहरति तः सत्कृत्य अयं धर्मपर्यायः श्रोतव्य उद्ग्रहीतव्यो धार-यितव्यो वाचयितव्यो मनसि कर्तव्यः। एवं चित्तमुत्पादयितव्यम्।

1 Tib. དཀྱིག་ཡུངས་འབྲུ་ཙམ། 2 Tib. འབྲས་བུ།

3 Ms. सत्करेत् 4 Ms. पूजयेत् 5 Ms. सततसमितमिमं धर्मपर्यायं

लाभा अस्माभिः सुलब्धाः। योऽस्माभिः श्रुतम् अपथगामिनां पथमुपदर्शयति अनर्थे अर्थसंज्ञिनाम् अनित्ये नित्यसंज्ञिनाम् असुखे सुखसंज्ञिनां यदस्माभिर्नरकतिर्यग्योनियमलोकपरिमोक्षणार्थं तथागतकृत्यं कृतम्। अवलोकितेश्वर आह। महाकृत्येन तथागतकृत्येन इमं धर्मपर्यायं सर्वसत्त्वानां प्रकाशितम्।

भगवानाह। अयं च कुलपुत्र धर्मपर्यायः पश्चिमे काले पश्चिमे समये दक्षिणापथे प्रचरिष्यति तत्रापि भिक्षुभिक्षुण्युपासकोपासिकाराजराजपुत्रमहामात्रामात्या भाजनीभूताः पूजका धारका वाचका भविष्यन्ति श्रद्धास्यन्ति पत्तीष्यन्ति। स चे उत्तरपूर्वपश्चिमायां प्रचरे तत् परकर्माभियुक्तास्ते सत्त्वा भविष्यन्ति न श्रोष्यन्ति न श्रद्धास्यन्ति न पत्तीष्यन्ति न पूजयिष्यन्ति हीनवीर्यनष्टस्मृतयो नानाव्याक्षेप-कुटम्बदासदासीभोगैश्वर्य-हास्यलास्यनाट्यनृत्यगीतेर्ष्यामात्सर्यस्मृतयो न श्रोष्यन्ति न पत्तीष्यन्ति नपूजयिष्यन्ति ते अपरिमुक्ता एव जरा-व्याधि-मरण-शोक-परिदेव-दुःखदौर्मनस्योपायासेभ्यः प्रेतयमलोकविषयेभ्यो भविष्यन्ति। तस्मात्तर्हि तैः कुलपुत्रैः कुलदुहितृभिर्वा सर्वापायैरात्मानं परिमोक्तुकामेन सत्कृत्य अयं धर्मपर्यायः पूजयितव्यो धारयितव्यः सत्कर्तव्यः परेभ्यः संप्रकाशतितव्यो मनसा धारयितव्यः। डिम्बडुमरदुःस्वप्नदुर्निमित्तेषु अकालमृत्यु-गोमर-पशुमर-मानुषमरेभ्यो नानाव्याधिभयोपद्रवेभ्य इमं धर्मपर्यायं पूजयित्वा वाचयितव्यः ध्वजे वा उच्छ्रपितं कृत्वा पूजयित्वा नानागन्धपुष्पधूपवाद्यैः प्रचेष्टव्यः। चतुर्दिशे बलिं दत्त्वाभिनमस्कृत्य पुष्पधूपगन्धैः सर्व इत्युपद्रवाः प्रशमं यास्यन्ति।

अथ भगवान् तस्यां वेलायामिमा गाथा[1] अभाषत ।

[सर्वस्य सत्त्वस्य अनुग्रहार्थं]
या भाषिता पूर्वभवेषु नायकैः ।
[अहं तथा त्वामपि देशयिष्ये]
गृह्णाहि आनन्द इमं समाधिम् ॥१॥

यश्चैव त्रैधातुकदानु दद्या
सप्तान रत्नान च पूरयित्वा[2] ।

1 The lines of these verses are hopelessly muddled in the ms., and this is partly due to the omission of a few lines here and there. With great difficulty the lines have been re-arranged and the omitted lines and words supplied on the basis of the Tibetan version, which is reproduced here. The lines and words supplied are put within brackets [ ].

(Xylo., folio 422b, l. 1) དེ་ནས་ དེའི་ཚེ་ བཅོམ་ལྡན་འདས་ཀྱི་ཚིགས་ བཅད་པ་འདི་ དག་ བཀའ་སྩལ་ཏོ །

སྔོན་གྱི་ སྲིད་པར་ འདྲེན་པས་གང་གསུངས་ཤིང །
སེམས་ཅན་ཐམས་ཅད་རྗེས་སུ་ གཟུང་བའི་ཕྱིར །
དེ་སྐད་ངས་ཀྱང་ཁྱོད་ལ་བཤད་པ་ཡི །
ཏིང་འཛིན་འདི་ནི་གཟུང་ཞིག་ ཀུན་དགའ་བོ ॥ ༡

སངས་རྒྱས་ཆོས་དང་དགེ་འདུན་དཀོན་མཆོག་ལ །
གང་གིས་ཁམས་གསུམ་སྦྱིན་པར་བྱིན་པ་བས །

2 The Tib. restoration, however, would be.

यश्चैव त्रैधातुकदानु दद्या बुद्धधर्मसंघरत्नान च पूजयित्वा ।
यश्चेम सूत्रस्य च पूजयेत उपमापि तस्य न स भोन्ति दानम् ॥

बुद्धेषु धर्मेषु सदाप्रमत्तः
उपमापि तस्य न स भोन्ति दानम् ॥२॥

यश्चैव बुद्धेष्वभिश्रद्दधित्वा
विहारकारापयि चैत्यकानि ।
यश्चैव सूत्रं[च] धरेति कश्चि
अयं ततो बहुतरु पुण्यु भेष्यते ॥३॥

यश्चापि एकं क्षिपयेत पुष्पं
वस्त्रं च माल्यं च विलेपनं तथा ।
इमं समाधिं च[य] सत्करेत
नायं ततो बहुतरु पुण्यु भोति ॥४॥

མདོ་སྡེ་ འདི་ལ་མཆོད་པ་ བྱས་ན་ནི །
སྦྱིན་པས་དེ་ཡི་དཔེར་ ཡང་མི་ ཤོད་དོ ॥ ༢

གང་གིས་སངས་ རྒྱས་ལ་ ནི་དད་བྱས་ཏེ །
ཚད་མེད་ གཙུག་ ལག་ཁང་དག་ བརྩིགས་པ་བས །
གང་ཞིག་མདོ་འདི་ འཛིན་པ་གང་ ཡིན་པ །
དེ་ནི་དེ་བས་ བསོད་ནམས་ མང་པོར་ འགྱུར ॥ ༣

གང་ཞིག་ མེ་ཏོག་ གཅིག་ཙམ་ འཐོར་ བྱེད་ཅིང །
གོས་དང་ ཕྲེང་བ་ བྱུག་པ་དེ་བཞིན་ཏེ །
ཏིང་ འཛིན་ འདི་ལ་བསྙེན་ བཀུར་ བྱེད་གྱུར་ན །
བསོད་ནམས་ ཚོགས་ ཆེར་སྤུ་མ་ དེ་གི་ འགྱུར ॥ ༤

यश्चापि कार्षापणु दानु दद्या
इमस्य सूत्रस्य च पूजनार्थम् ।
जनित्वा[1] बोधाय च मैत्रचित्ते
अयं ततो बहुतरु पुण्यु प्राप्नुया ॥५॥

यश्चापि सत्त्वेषु इमं समाधिं
प्रकाशये देशयि बोधिसत्त्वः ।
प्रतिपादये बोधिमनुत्तरे तथा
उपमापि पुण्यंपि न तस्य भोति ॥६॥

इमं च श्रुत्वा तथ आनुशंसाः
कृत्वा च मैत्रं तथ सर्वसत्त्वैः ।

གང་གིས་མདོ་ སྡེ་འདི་ ལ་མཆོད་པའི་ཕྱིར །
ཀཱ་ར་ཥ་པཱ་ཎི་འི་ སྦྱིན་པ་ སྦྱིན་བྱེད་ཅིང །
བྱང་ཆུབ་ ཕྱིར་ནི་ བྱམས་པའི་ སེམས་ བསྐྱེད་ན །
དེ་ནི་དེ་བས་ བསོད་ནམས་མང་ པོ་འཐོབ ॥ ༥

བྱང་ཆུབ་སེམས་ དཔའ་ གང་ གིས་ སེམས་ཅན་ལ །
ཏིང་ འཛིན་འདི་ བཤད་ལུང་ཐོག་ དེ་བཞིན་དུ །
བླ་མེད་ བྱང་ཆུབ་ ཕྱིར་ནི་ བཀོད་ གྱུར་ན །
དེ་ཡི་བསོད་ ནམས་ དཔེར་ ཡང་མི་ བརྗོད་འགྱུར ॥ ༦

དེ་ ལྟས་ ཕན་ ཡོན་ འདི་ དག་ ཐོས་ ནས་ཀྱང །
(423, l. 1) སེམས་ ཅན་ ཀུན་ལ་ དེ་ བཞིན་ བྱམས་ བྱས་ཏེ །

1 Ms. जपित्वा

तस्मापि सूत्रम् इमु धारयेत
लिखेत वाचेत तथा प्रकाशये ॥७॥

जराव्याधिमृत्यु [भिस्तथातितीव्रैः
शतैश्चदुःखैः] परिपीडिताश्च ।
उपपद्यमाना नरकेषु प्रेतयो
मा पश्चकाले परिताप्यु भेष्यथ ॥८॥

स मृत्युकाले भयभीतमानसः
अभीक्ष्णमुच्छ्वासनमुच्छ्वसन्तः ।
कोस्माभि त्राणं भवते परायणं
मुखे मुखं प्रेक्षति बालबुद्धिः ॥९॥

མདོ་འདི་གཟུང་ཞིང་ ཡི་གེར་ བྲི་བར་བྱ །
བཀླག་པར་ བྱ་ཞིང་ དེ་བཞིན་ བཤད་པར་བྱ ॥ ༧

རྒ་དང་ དེ་བཞིན་ ན་འཆིས་ གནོད་ གྱུར་ཅིང །
སྡུག་བསྔལ་ རབ་དྲག་ བརྒྱ་ཡིས་ ཡོངས་ གདུངས་ལ །
སེམས་ དམྱལ་ ཡི་དགས་ རྣམས་ སུ་སྐྱེ་བ་ན །
ཕྱི་མའི་ དུས་ན་འགྱོད་པར་ གྱུར་ད་རེ ॥ ༨

འཆི་བའི་ དུས་ན་ ཡིད་ སྐྲག་འཇིགས་ གྱུར་ལ །
ཡང་དག་ཡང་དུ་ སྨམ་པ་འདོན་ བྱེད་ ཅིང །
བདག་གི་ དཔུང་ གཉེན་སྐྱབས་ སུ་འགྱུར་བ་ཞེས །
བྱིས་པའི་ བློ་ཅན་ པན་ཚུན་ ཧོག་ག་རེ ॥ ༩

[यस्मा तथागतमभिपूजयित्वा]
बौद्धं च धर्मं तथ सांघिकञ्च ।
हरिष्य नेष्ये यमलोकि दारुणे
न तस्य त्राणं सद कश्चि भेष्यति ॥१०॥

न पुत्रदारं न च मित्रबान्धवान्
न चापि राष्ट्रं न च हास्यलास्यम् ।
धनं न धान्यं न च वस्त्रभूषणं
सर्वं जहित्वा पुन[1] दुःखदारुणम् ॥११॥

इमं समाधिं न च श्रद्दधित्वा
तथा [च दुःखं] दारुणं वेदयते ।

གང་ཕྱིར་ དེ་བཞིན་ གཤེགས་ པ་མཆོད་ ཅིང །
སངས་ རྒྱས་ ཆོས་དང་ དགེ་འདུན་ ནོར་ འཕྲོགས་པ །
མི་ཟད་ གཤིན་ རྗེའི་འཇིག་ རྟེན་ ཁྲིད་འགྱུར་ཞིང །
ཕྱིན་ཆད་ རྟག་ཏུ་ སྐྱབས་ འགྱུར་འགའ་ ཡང་མེད ॥ ༡༠

བུ་སྨད་ ཡོད་ མིན་ཉེ་དུ་ ཚ་ལག་མེད་ །
ཡུལ་འཁོར་ ཡོད་མིན་ གཞད་གད་ འཇོ་སྒེག་མེད །
ནོར་དང་ ཞབྲུ་དང་ དེ་བཞིན་ གོས་དང་རྒྱན །
ཀུན་སྤངས་ སྡུག་བསྔལ་ ཡང་དང་ ཡང་མི་ཟད ॥ ༡༡

ཏིང་འཛིན འདི་ལ་དད་པར་མ་བྱས་པས །
དེ་འདྲའི་ སྡུ་ག་བསྔལ་ མི་ཟད་མྱོང་ འགྱུར་བས །

1 Ms. पुनरपि

इमु दुःखु श्रुत्वा इमु आनुशंसाः
को बालबुद्धिर्न जने प्रसादम् ॥१२॥

तस्माच्च तैर्हि सद भिक्षुभिक्षुणी
उपासकोपासिकराजभिः सदा ।
इमं च सूत्रं सद धारयित्वा
सत्कारु नित्यं च कर्तव्यधारके ॥१३॥

अथायुष्मानानन्दो भगवन्तमेतदवोचत् । उद्गृहीतं मया भगवन् इमं धर्मपर्यायं शास्तृसंज्ञया धारयिष्यामि पूजयिष्यामि सर्वसत्त्वेभ्यः संप्रकाशयिष्यामि । भगवानाह । यदि त्वमानन्द यन्मया धर्मो भाषितः श्रुतो धारयितुं तत् सर्वं न धारये न वाचये न पूजये न वैस्तारिकीकुर्या[1] त्वया मम नापराध्ये न चाशुश्रूषा कृता भवे न चाश्रावकत्वम्[2] । यश्च इमं धर्मपर्यायं न धारये न

སྡུག་ བསྔལ་འདི་ དང་ ཕན་ ཡོན་ དེ་ ཐོས་ན །
བྱིས་པའི་ བློ་ཡང་ སུ་ཞིག་ དད་ མི་སྐྱེད ॥ ༡༢

དེ་ཕྱིར་ རྟག་ཏུ་ དགེ་ སློང་ ཕ་མ་དང་ །
དགེ་ བསྙེན་ རྣམས་ དང་རྒྱལ་ པོས་ཁོར་ཟུག་དང་ །
(423b. 1. 1) མདོ་སྡེ་འདི་ནི་ རྟག་ཏུ་གཟུང་བྱ་ཞིང་ །
འཛིན་པ་ལ་ཡང་ རྟག་ཏུ་བསྙེན་བཀུར་བྱ ॥ ༡༣

1 Tib. གུས་པར་མ་ཉན་པར་ཡང་མི་འགྱུར་ལ །
2 Tib. ཉན་ ཐོས་ཉིད་ མ་ཡིན་པར་ །

वाचये न पूजये न संप्रकाशये न मनसिकुर्या [1]स माम् अपराध्ये अशुश्रूषा कृता भवे अश्रावकत्वं भवे। तस्मात्तर्हि त्वमानन्द सत्कृत्य अयं[1] धर्मपर्यायो धारयितव्यः। अयं ते तथागतस्यानुत्तरसम्यक्संबोध-तथागतकृत्यं करिष्यति पश्चिमे काले पश्चिमे समये सर्वसत्त्वानाम्।

अस्मिन् खलु पुनर्धर्मपर्याये भगवता भाष्यमाणे षष्टीनां प्राणिसहस्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि सप्तानां शतानां बोधिसत्त्वसमाधिप्रतिलंभोऽभूत्। पञ्चानां शतानां नानाबुद्धक्षेत्रव्याकरणप्रतिलंभोऽभूत्। नवतीनां प्राणिसहस्राणां सर्वक्लेशविनिर्मुक्ताः सर्वाक्षणापायदुर्गतयः प्रहीणाः।

अथार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः पुनर्भगवन्तमेतदवोचत्। अयं भगवन् धर्मपर्यायः पश्चिमकाले पश्चिमसमये तेषां कुलपुत्राणां श्रोतॄणां धारयितॄणां मानयितॄणां[2] तेषां च लेखकानां तथागतकृत्यं कारिष्यति। व्याकृतास्ते यथेप्सितेषु नानाबुद्धक्षेत्रेषु। ये च सत्त्वाः पश्चिमे काले पश्चिमे [सम]ये हास्यनाट्यगीतवादितेषु नानाव्याक्षेपबहुला रागद्वेषमोहान्धा रतिक्रीडासंज्ञिनः अनित्ये नित्यसंज्ञिनः ईर्ष्यामात्सर्यदौःशील्यपरिगृहीता न पूजयिष्यन्ति न मानयिष्यन्ति न श्रद्धास्यन्ति न पत्तीयिष्यन्ति न धारयिष्यन्ति न श्रोष्यन्ति न प्रतिपत्त्या प्रतिपत्स्यन्ते। ते तं पूर्वकर्मशुभफलं परिक्षेपं कृत्वा नानादुःख-

1 Ms. त्वं

2 Ms. इमं

दौर्मनस्यं नारकं दुःखमनुभविष्यन्ति। ततस्ते अनेकानि कल्पकोटीशतानि दुःखमनुभवित्वा नरकतिर्यग्योनियमलोकेषु वोपपत्स्यन्ते। दीर्घरात्रमकल्याणमित्रवशाः पश्चानुतापिनो भविष्यन्ति इमं क्षणं विरागयित्वा। तस्मात्तर्हि काय[वाङ्म]नःसंवरेण भवितव्यम्। बुद्धधर्मसंघे [अ]भेद्यप्रसादेन सर्वसत्त्वेषु मैत्रचित्तेन ईर्ष्यामात्सर्यदौःशील्यचित्तपरिवर्जितेन क्रोधपरिवर्जितेन भवितव्यम्।

अथ सा यथासमागता पर्षं तैस्तैः पुण्याभिसंस्कारैः तथागतं [1]पूजयाति स्म। दिव्यपुष्पगन्धमाल्यविलेपनवस्त्राभरणैः किलिकिलि[2] प्रक्ष्वेडितशब्दैश्च दिव्यतूर्यताडावचरसंगीतैः साधुकारं [3]प्रददौ। तद् यथा साधु साधु भगवन् सुभाषितमिदं महाधर्मपर्यायं सर्वसत्त्वानामर्थाय तथागतशासनचिरस्थित्यर्थम्।

अथायुष्मानानन्दो भगवन्तमेतदवोचत्। किंनामायं भगवन् धर्मपर्यायः कथं च वयं भगवन् धारयामः। भगवानाह। तस्मात्तर्हि त्वमानन्द इमं धर्मपर्यायं सर्वतथागतज्ञानबोधिसत्त्वभूमिक्रमणमित्यपि नाम धारय। ऋद्धिविकुर्वाणमहात्मसान्निपातमित्यपि नाम धारय। सर्वतथागताधिष्ठानसत्त्वावलोकनबुद्धक्षेत्रसन्दर्शनव्यूहमित्यपि नाम धारय। इदमवोचद् भगवान्। आत्तमनाः आर्यावलोकितेश्वरमंजुश्रीवज्रपाणिप्रभृतयः सर्वे बोधिसत्त्वा महासत्त्वाः सर्वे च महाश्रावकाः सर्वे च शक्रब्रह्मलोकपालाश्चत्वारश्च

1 Ms. पूज्यन्ते  2 Tib. अलल  3 Ms. प्रददुः

महाराजा महायक्षिण्यः अनौपम्या विमलप्रभा [प्रभावती-भीमा-श्री-शंखिनी-हरिता-महादेवी-]प्रभृतयो देवनागयक्षगन्धर्वासुर-[गरुड़किन्नरमहोरगाः]। सा च सर्वावती पर्ष यथासमागता भगवतो भाषितमभिनन्द्य [साधुकारमदात्। साधु साधु भगवन्]।
[ इति सर्वतथागताधिष्ठानसत्त्वावलोकनबुद्धक्षेत्रसन्दर्शनव्यूहम् नाम महायानसूत्रम् ] ।

# आर्यश्रीमहादेवीव्याकरणम्[1]

ॐ नमः सर्वबुद्धबोधिसत्त्वेभ्यः ॥ एवं मया श्रुतमेकसमये भगवान् सुखावत्यां विहरति स्म महता बोधिसत्त्वसंघेन सार्धं— तद्यथा अवलोकितेश्वरेण च बोधिसत्त्वेन महासत्त्वेन महास्थामप्राप्तेन च बोधिसत्त्वेन महासत्त्वेन सर्वनीवरणविष्कंभिना च बोधिसत्त्वेन महासत्त्वेन क्षितिगर्भेण च बोधिसत्त्वेन महासत्त्वेन समन्तभद्रेण च बोधिसत्त्वेन महासत्त्वेन आकाशगर्भेण च बोधिसत्त्वेन महासत्त्वेन वज्रपाणिना च बोधिसत्त्वेन महासत्त्वेन सर्वभयहरेण च बोधिसत्त्वेन महासत्त्वेन एवं सर्वमङ्गलधारिणा च बोधिसत्त्वेन महासत्त्वेन सर्वपुण्यलक्षणधारिणा च बोधिसत्त्वेन महासत्त्वेन चन्द्रसूर्यत्रैलोक्यधारिणा[2] च बोधिसत्त्वेन महासत्त्वेन सर्वतीर्थमङ्गलधारिणा च बोधिसत्त्वेन महासत्त्वेन मंजुश्रिया च कुमार[भूतेन च बोधिसत्त्वेन महासत्त्वेन][3] एवंप्रमुखैर्बोधिसत्त्वैर्महासत्त्वैः[4] ।

1 The Tibetan title is འཕགས་པ་ལྷ་མོ་དཔལ་ལུང་བསྟན་པ། ।

2 Tib. ཉི་མ་དང་། འཇིག་རྟེན་འཛིན་པ་དང་། = °लोकधारिणा ।

3 Tib. བྱང་ཆུབ་སེམསདཔའ་སེམས་དཔའ་ཆེན་པོ་འཇམ་དཔལ་གཞོན་ནུར་གྱུར་པ་དང་། ।

4 Tib. དེ་ལ་སོགས་པ་བསྐལ་པ་བཟང་པོའི་བྱང་ཆུབ་སེམས་དཔའ་སེམས་དཔའ་ཆེན་པོ་ ཐམསཅད་ དང་ ཐབས་ཅིག་ཏུ་ བཞུགས་སོ ། = एवंप्रमुखैर्भद्रकल्पिकैर्बोधिसत्त्वैर्महासत्त्वैः ।

अथ खल्वार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्यैकान्ते[1] न्यषीदत्। श्रीरपि महादेवी [भगव][2]न्तमेवोपसंक्रान्ता। उपसंक्रम्य भगवतः पादौ शतसहस्रं प्रदक्षिणीकृत्य सर्वांश्च तान् सुखावतीनिवासिनो बोधिसत्त्वान् महासत्त्वान् शिरसाभिवन्द्यैकान्ते न्यषीदत्।

अथ खलु भगवाननेकशतसहस्रपुण्यालंकृतस्तथागतकोटिपरिवृतः सर्वशक्रब्रह्मलोकपालस्तुतस्तवितः श्रियं महादेवीं दृष्ट्वा महाब्रह्मस्वरेणावलोकितेश्वरं बोधिसत्त्वं[3] महासत्त्वमेतदवोचत्। यः कश्चिदवलोकितेश्वर राजा वा राजमात्रो वा भिक्षुभिक्षुण्युपासकोपासिका वा ब्राह्मणक्षत्रियविट्शूद्रा वा श्रिया महादेव्या अष्टोत्तरं[4] शतं विमलप्रख्यं नाम स्तोत्रं धारयिष्यन्ति तस्य राज्ञः क्षत्रियस्य विषये तेषां सत्त्वानां सर्वभयेत्युपद्रवा प्रशमिष्यन्ति। सर्वचोरधूर्तमनुष्यामनुष्य[भयं][5] न भविष्यति। सर्वधनधान्यकोशकोष्ठागारविवृद्धिर्भविष्यति। तस्य च राज्ञः क्षत्रियस्य गृहे श्रीर्निवसिष्यति[6]। अथ ते बोधिसत्त्वा महासत्त्वा एवं वाचमभाषन्त। साधु साधु

1 Ms. puts the words शत...महासत्त्वान् after शिरसाभिवन्द्य। The alteration has been made here in the light of the Tibetan rendering.

2 Tib. བཅོམ་ལྡན་འདས།

3 Ms. ०सत्त्वो।

4 Ms. अष्टुत्तरं।

5 Tib. མི་མ་ཡིན་པའི་འཇིགས་པ།

6 Correct Sanskrit would be निवत्स्यति।

भगवन् सुभाषितेयं वाक्। ये[1] श्रिया महादेव्या नामधेयानि धारयिष्यन्ति[2] तेषामपीमा[3] गुणानुशंसा भविष्यन्ति।

अथार्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतद्वोचत्। कुत्र भगवन् श्रिया महादेव्या कुशलमूलमवरोपितम्। भगवानाह। गंगानदीवालुकासमानां[4] तथागतानामन्तिकात् श्रिया महादेव्या कुशलमूलमवरोपितम्। भूतपूर्वमवलोकितेश्वर अतीतेऽध्वनि रत्नसंभवायां लोकधातौ रत्नकुसुमगुणसागरवैदूर्यकनकगिरिसुवर्णकांचनप्रभासश्रीर्नाम तथागतो लोके उदपादि। तस्यान्तिके श्रिया महादेव्या कुशलमूलमवरोपितमन्येषां च बहूनां तथागतानामन्तिके। इमानि च तथागतनामानि तस्याः श्रिया महादेव्याः कुशलमूलविवृद्धिसंपत्तिकराणि[5]। सदानुबद्धानि [तानि][6] श्रिया महादेव्या यानीह समुदीरितानि सर्वपापहराणि सर्वकिल्विषनाशनानि सर्वकार्यविमलीकरणानि धनधान्याकर्षणविवृद्धिकराणि दारिद्र्यपरिच्छेदनकराणि[7] सर्वदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगावर्जनाकर्षणकराणि[8] सर्वेत्युपद्रवोपसर्गोपायाससर्वकलिकलहविग्रहविवादप्रशमनकराणि षट्पारमितानिष्पादनकराणि।

1 Tib. གསུང་འདི……..གང་དག །

2 Tib. adds here ཐོས་ནས་ཀྱང་སྒྲུབ་པར་བགྱིད་པ །=श्रुत्वा च साधयिष्यन्ति।

3 Ms. ०मानि। 4 Ms. वालिका। 5 Tib. འགྲུབ་པར་བྱེད་པ །

6 རྗེས་སུ་འབྲང་བ་ཡིན་ཏེ ། དེ་དག་ནི ། 7 Ms. दारिद्रयो।

8 Tib. ལྟོ་འཕྱེ་ཆེན་པོ ཐམས་ཅད་ འདུན་པར་བྱེད་ཅིང་ །

नमः श्रीघनाय[1] तथागताय। नमो रत्नकुसुमगुणसागरवैडूर्यकनकगिरिसुवर्णकांचनप्रभासश्रिये तथागताय। नमो गङ्गासर्वतीर्थमुखमङ्गलश्रिये तथागताय। नमश्चन्दनकुसुमतेजोनक्षत्रप्रभासश्रिये तथागताय। नमः समन्तावभासविजितसंग्रामश्रिये तथागताय। नमो गुणसमुद्रावभासमण्डलश्रिये तथागताय। नमो धार्म[विकु]र्वणध्वजवेगश्रिये[2] तथागताय। नमो ज्योतिःसौम्यगन्धावभासश्रिये[3] तथागताय। नमः सत्त्वाशयशमनशरीरश्रिये तथागताय। नमः प्रणिधानसागरा[वभास]श्रिये[4] तथागताय। नमः सुपरिकीर्तितनामधेयश्रिये तथागताय[5]। नमः असंख्येयवीर्यसुसंप्रस्थितश्रिये तथागताय। नमः अप्रमेयसुवर्णोत्त[प्रभास-]श्रिये[6] तथागताय। नमः सर्वस्वराङ्गरुतनिर्घोषश्रिये तथागताय। नमः प्रज्ञाप्रदीपासंख्येयप्रभाकेतुश्रिये तथागताय। नमो नारायण-

1 Ms. श्रीगणाय, Tib. དཔལ་སྟུག་པོ་ལ །

2 Tbi. དེ་བཞིན་གཤེགས་པ་ ཆོ་འཕྲུལ་རྒྱལ་མཚན་ཤུགས་ཀྱི་དཔལ་ལ་ཕྱག་འཚལ་ལོ །

3 Ms. गन्धावहास, Tib. སྤོས་སྣང་ ། 4 རྒྱ་མཚོ་སྣང་བའི་དཔལ་ལ །

5 Tib. adds the following two names :—

(i) དེ་བཞིན་གཤེགས་པ་ ཕྱིར་མི་ལྡོག་པའི་འཁོར་ལོ་རིན་པོ་ཆེའི་གནས་ཀྱི་དཔལ་ལ་ ཕྱག་འཚལ་ལོ །

(ii) དེ་བཞིན་གཤེགས་པ་ ཉི་མའི་ དཀྱིལ་ འཁོར་འོད་ འཕགས་ དཔལ་ལ ཕྱག་འཚལ་ལོ །

6 Tib. གསེར་མཆོག་སྣང་བའི་དཔལ་ལ །

व्रतसन्नाहसुमेरुश्रिये तथागताय। नमो ब्रह्मश्रिये तथागताय। नमो महेश्वरश्रिये तथागताय। नमश्चन्द्रसूर्यश्रिये तथागताय। नमो गम्भीरधर्मप्रभाराजश्रिये तथागताय। नमो गगनप्रदीपाभिरामश्रिये तथागताय। नमः सूर्यप्रभाकेतुश्रिये तथागताय। नमो गन्धप्रदीपश्रिये तथागताय। नमः सागरगर्भसंभवश्रिये तथागताय। नमो निर्मितमेघगर्जन[यशः]श्रिये[1] तथागताय। नमः सर्वधर्मप्रभासव्यूहश्रिये तथागताय। नमो द्रुमराजविवर्धितश्रिये तथागताय। नमो रत्नार्चिःपर्वतश्रिये तथागताय। नमो ज्ञानार्चिःसागरश्रिये तथागताय। नमो महाप्रणिधिवेगश्रिये तथागताय। नमो महामेघश्रिये तथागताय। नमः स्मृतिकेतुराजश्रिये तथागताय। नम इन्द्रकेतुध्वजराजश्रिये तथागताय। नमः सर्वधनधान्याकर्षणश्रिये तथागताय। नमः सौम्याकर्षणश्रिये तथागताय। नमो लक्ष्म्याकर्षणश्रिये तथागताय। इमानि तथागतनामानि सत्कृत्य[2] धारयितव्यानि[3] वाचयितव्यानि एवं स कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यं प्रसविष्यति।

व्याकृता च श्रीमहादेवी तथागतैः। भविष्यसि त्वं श्रीमहादेवि अनागतेऽध्वनि श्री[महा]रत्नप्रतिमण्डितायां[4] लोकधातौ तत्र श्रीमणिरत्नसम्भवो नाम तथागतोऽर्हन् सम्यक्सम्बुद्धः। सा च लोकधातुर्नानादिव्यरत्नप्रतिमण्डिता भविष्यति।

1 Ms. निर्मितमेघसम्बर॰ Tib. དེ་བཞིན་གཤེགས་པ་སྤྲུལ་པའི་འབྲུག་སྒྲ་སྒྲོན་པའི་དཔལ་ལ་ཕྱག་འཚལ་ལོ། 2 Ms. सत्कृत्यम्। 3 Ms. धारयितव्यम। 4 Tib. ཆེན་པོ་རིན་པོ་ཆེས།

तत्र च लोकधातौ स एव तथागत आलोककरो भविष्यति । ते च बोधिसत्त्वास्तत्र बुद्धक्षेत्रे स्वयंप्रभा भविष्यन्त्यपरिमितायुषश्च । आकाशतश्च बुद्धधर्म[सङ्घ]शब्दो[1] निश्चरिष्यति । ये च बोधिसत्त्वास्तत्र बुद्धक्षेत्रे उपपत्स्यन्ते सर्वे ते पद्मकर्कटिकासूपपत्स्यन्ते[2] । तत्र कतमद्द्वादशदण्डकं नामाष्टशतं विमलप्रख्यं स्तोत्रम् । शृणु अभयावलोकितेश्वर श्रिया महादेव्या नामानि । तद्यथा सर्वतथागताभिषिक्ता [सर्वदेवताभिषिक्ता][3] सर्वतथागतमाता सर्वदेवतामाता सर्वतथागतश्रीः सर्वबोधिसत्त्वश्रीः सर्वार्यश्रावकप्रत्येकबुद्धश्रीः ब्रह्मविष्णुमहेश्वरश्रीः महास्थानगतश्रीः सर्वदेवताभिमुखश्रीः सर्वदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगश्रीः सर्वविद्याधरवज्रपाणिवज्रधरश्रीः चतुःपञ्चलोकपालश्रीः अष्टग्रहाष्टाविंशतिनक्षत्रश्रीः ॐ सावित्री धात्री माता चतुर्वेदश्रीः लक्ष्मीः भूतमाता जया विजया गङ्गा सर्वतीर्था सर्वमङ्गल्या विमलनिर्मलकरश्रीः सर्वपापहन्त्री निर्मद[करा][4] चन्द्रश्रीः सूर्यश्रीः सर्वग्रहश्रीः सिंहवाहिनी शतसहस्रकोटीपद्मविवरसंच्छन्ना पद्मा पद्मसम्भवा पद्मालया पद्मधरा पद्मावती अनेकरत्नांशुमाला[5] धनदा श्वेता महाश्वेता श्वेतभुजा सर्वमङ्गलधारिणी सर्वपुण्योपचिताङ्गी दाक्षायणी शतसहस्रभुजा शतसहस्रनयना शत-

1 Tib. སངས་རྒྱས་ དང་ ཆོས་ དང་ ། དགེ་འདུན་གྱི་སྒྲ །

2 Tib. པདྨའི་སྙིང་པོ་དག་ལས །

3 Tib. ལྷ་ ཐམས་ཅད་ཀྱིས་ དབང་བསྐུར་བ ། 4 Tib. རྒྱགས་བྲེད་མ །

5 Ms. ०श्वीला० Tib. རིན་པོ་ཆེ་འོད་འབར་བའི་ཕྲེང་བ་དུ་མ་དང་ལྡན་མ །

सहस्रशिरा विविधविचित्रमणिमौलिधरा सुरूपा[1] विश्वरूपा यशा महायशा सौम्या बहुजीमूता पवित्रकेशा चन्द्रकान्ता सूर्यकान्ता शुभा शुभकर्त्री सर्वसत्त्वाभिमुखी आर्या [कुसुमश्रीः][2] कुसुमेश्वरा सर्वसुमेरुपर्वतराजश्रीः सर्वनदीसरिच्छ्रीः सर्वतोयसमुद्रश्रीः सर्वतीर्थाभिमुखश्रीः[3] सर्वौषधितृणवनस्पतिधनधान्यश्रीः हिरण्यदा अन्नपानदा [प्रभास्वरा[4] आलोककरा[5] पवित्राङ्गा[6]] सर्वतथागतवशवर्तिनी सर्वदेवगणमुखश्रीः यमवरुणकुबेरवासवश्रीः दात्री भोक्त्री तेजा तेजोवती विभूतिः समृद्धिः विवृद्धिः उन्नतिः धर्मश्रीः माधवाश्रया कुसुमनिलया [7]अनसूया पुरुषकाराश्रया सर्वपवित्रगात्रा मङ्गलहस्ता सर्वालक्ष्मीनाशयित्री सर्वपुण्याकर्षणश्रीः सर्वपृथिवी[श्रीः] सर्वराजश्रीः सर्वविद्याधरराजश्रीः सर्वभूतयक्षराक्षसप्रेतपिशाचकुंभाण्डमहोरगश्रीः द्युतिः प्रमोदभाग्यलोला सर्वर्षिपवित्रश्रीः[8] सर्वश्रीः भवज्येष्ठोत्तमश्रीः सर्वकिन्नरसर्वसूर्योत्तमश्रीः निरवद्यस्थानवासिनी [रूपवती[9] सुखकरी[10]] कुबेरकान्ता धर्मराजश्रीः। ॐ विलोकय तारय मोचय मम सर्वदुःखेभ्यः सर्वपुण्यसम्भारानामुखीकुरु स्वाहा। ॐ गङ्गादिसर्वतीर्थान्यामुखीकुरु स्वाहा[11]। ॐ सावित्र्यै[12] स्वाहा। सर्वमङ्गल-

1 Ms. स्वरुपा, Tib. གཟུགས་བཟང་མ། 2 Tib. མེ་ཏོག་གི་དཔལ་མ།

3 རྩྭ་སྔོགས་ཐམས་ཅད་ མངོན་དུ་ཕྱོགས་པའི་དཔལ་མ།

4 Tib. འོད་གསལ་མ། 5 Tib. སྣང་མ། 6 Tib. ལུས་གཙང་མ།

7 Ms. अनुसूया 8 Ms. ०रिषि० 9 Tib. ཡིད་འོང་མ།

10 Tib. སིམ་བྱེད་མ། 11 Ms. गङ्गसर्वतीर्थामुखे स्वाहा। 12 Tib. सर्वविदत्वे।

धारिण्यै[1] स्वाहा। चतुर्वेदनक्षत्रग्रहगणादिमूर्त्यै[2] स्वाहा। ब्रह्मणे स्वाहा। विष्णवे स्वाहा। रुद्राय स्वाहा। विश्वमुखाय स्वाहा। ॐ नि[ग्रि] ग्रिनि सर्वकार्यसाधनि[3] सिनि सिनि आवाहयामि देवि[4] श्रीवैश्रवणाय स्वाहा। सुवर्णधनधान्याकर्षण्यै[5] स्वाहा। सर्वपुण्याकर्षण्यै स्वाहा। श्रीदेवताकर्षण्यै[6] स्वाहा। सर्वपापनाशन्यै स्वाहा। सर्वालक्ष्मीप्रशमन्यै स्वाहा। सर्वतथागताभिषिक्तायै[7] स्वाहा। सर्वदेवता[भि]मुखश्रियै स्वाहा। आयुर्बलवर्णकरायै[8] स्वाहा। सर्वपवित्र[9]-मङ्गलहस्तायै[10] स्वाहा। सिंहवाहिन्यै[11] स्वाहा। पद्मसंभूतायै[12] स्वाहा। सर्वकृत्यकाखोर्दविनाशन्यै स्वाहा। इमानि तान्यभयावलोकितेश्वर श्रिया महादेव्या नामानि सर्वकिल्विषनाशनानि सर्वपापविध्वंसनकराणि सर्वपुण्याकर्षणकराणि सर्वालक्ष्मीप्रशमनकराणि सर्वश्रीसौभाग्याकर्षणकराणि। यः कश्चिद्धारयिष्यति इमानि तथागतनामानि कल्यमुत्थाय शुचिना सर्वबुद्धानां पुष्पधूपं दत्त्वा श्रियै महादेव्यै चन्दनधूपं दत्त्वा वाचयितव्यानि सर्वाश्रियमधिगमिष्यति[13] सर्वसुखसौमनस्यलाभी भविष्यति सर्वदेवताश्च रक्षावरणगुप्तिं करिष्यन्ति सर्वकार्यसिद्धिस्तस्य भविष्यति।

इदमवोचद्भगवानात्तमना अभयावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः। सा च सर्वावती पर्षत् सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्॥

1 Tib. धारणी। 2 Tib. ०ग्राहागणाहावनाधामूर्तये। 3 Ms. ०साधैनि। 4 Tib. आवहा देवहा श्रीवैश्रमणाय। 5 Ms. ०कर्षिन्यै। 6 Tib. श्रीदेवते। 7 Tib. ०भिषेकये। 8 Tib. करये। 9 Tib. सर्वविदत्व०। 10 Tib. ०हस्ताय। 11 Tib. ०वहननै। 12 Tib. ०भूतये। 13 Ms. ०श्री०।

# अजितसेनव्याकरणम्

ॐ नमः सर्वज्ञाय ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवने अनाथपिण्डदस्यारामे महता भिक्षुसङ्घेन सार्धमर्धत्रयो-दशभिर्भिक्षुसहस्रैः। तद्यथा आयुष्मता चाज्ञातकौण्डिन्येन आयुष्मता च महानाम्ना आयुष्मता च रेवतेन आयुष्मता च वक्कुलेन आयुष्मता च शारिपु[त्रेण आयुष्मता च] पूर्णेन मैत्रायणी[पुत्रेण] च श्रावकनियुतैः। ते सर्वे येन भगवान् येन च जेतवनं विहारं तेनोपसंक्रान्ता भगवतः पादौ शिरसाभिवन्द्य भगवतः पुरतस्तस्थुर्द्वात्रिंशता[1] बोधिसत्त्वसहस्रैः। तद्यथा सह-चित्तोत्पादधर्मचक्रप्रवर्तनेन च बोधिसत्त्वेन महासत्त्वेन अनि-क्षिप्तधुरेण च बोधिसत्त्वेन महासत्त्वेन मैत्रेयेण च बोधिसत्त्वेन महासत्त्वेन अवलोकितेश्वरेण च बोधिसत्त्वेन महासत्त्वेन महा-स्थामप्राप्तेन च बोधिसत्त्वेन महासत्त्वेन। एवंप्रमुखैर्द्वात्रिंशता[1] बोधिसत्त्वसहस्रैः। ते सर्वे येन भगवान् येन च जेतवनं विहारं तेनोपसंक्रान्ता भगवतः पादौ शिरसाभिवन्द्य भगवतः पुरतस्तस्थुः। अथ खलु भगवान् पूर्वाह्णकालसमये निवास्य पात्रचीवरमा[त्तः] श्रावस्तीं महानगरीं पिण्डाय प्राविशत्। अथ भगवानायुष्मन्तमा-

1 Ms. ०त्रिंशतिभिः

नन्दमामन्त्रयते स्म। गच्छानन्द पात्रं चक्रिकं शिक्यमानय। अथायुष्मानानन्दो भगवतः श्रुतमात्रेण पात्रं चक्रिकं शिक्यं भगवते उपनामयामास। अथायुष्मानानन्दो भगवतः कृताञ्जलिपुटो भगवन्तं गाथाभिरध्यभाषत।

यदा त्वं प्रविशसि पिण्डपातिक
विमोचये त्वं[1] बहवं हि प्राणिनाम्।
उत्तारये त्वं[1] बहवं हि सत्त्वा
नरकभयाज्जातिजरामहाभया॥
संसारदुःखकलिला महाभया-
द्विमोचये त्वं[1] नर लोकनायक।
महानुभावो वरदक्षिणीयो[2]
विमोचयित्वा पुनरं हि आगमी॥

अथायुष्मानानन्दो भगवत इमा गाथा भाषित्वा तूष्णीं स्थितोऽभूत्। अथ भगवान् श्रावस्त्यां महानगर्यां नातिदूरे स्थितोऽभूत्। अथ ते सर्वे गवाक्षतोरणनिर्यूहका [हिरण्य]मयाः स्फटिकमया रूप्यमयाः प्रादुरभूवन्। तथा श्रावस्त्यां म[हानगर्यां] महान्तं जनकायं संस्थितोऽभूवन्। अथ स जनकायः संशयजातो बभूव को हेतुः कः प्रत्ययः नगरस्य शुभनिमित्तं प्रादुरभूत्। मा चेदं[3] नगरं भस्मप्रलयं स्यात्। अथ तत्र जनकाये अनेकवर्षशत-

1 Ms. यं

2 Ms. adds here विमोचयित्वा बहवं हि सत्त्वा संसारदुःखकलिला महाभया।

3 Ms. चायं

सहस्रकोटीको वृद्धमहल्लकः पुरुषः संस्थितोऽभूत् । अथ स पुरुषस्तं जनकायं समाश्वासयन्नेवमाह । मा [1]भैषुर्भोः कुलपुत्राः । अस्मिन्नेव पृथिवीप्रदेशे जेतवनं नाम विहारः[2] । तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । सोऽयं श्रावस्तीं महानगरीं पिण्डाय प्राविशत् । तस्यागमनकालसमये इदं शुभनिमित्तमभूत् । अथ स जनकायस्तं जीर्णकं पुरुषं कृताञ्जलिरे[वमाह] । यत्तस्य[3] भगवतस्तथागतस्यार्हतः सम्यक्संबुद्धस्य गु[णवर्णसमुदीरण]समये इदं शुभनिमित्तमभूत् । दृष्टमात्रस्य तस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य कीदृशः पुण्याभिसंस्कारो भविष्यति । अथ स जीर्णकपुरुषस्तं जनकायं भगवतो गुणवर्णसमुदीरणतया गाथाभिरध्यभाषत ।

यो लोकनाथस्य हि नामु यः श्रुणे
संसारदुःखा विनिमुक्तु सो नरो ।
अपायगामी न कदाचि भेष्यते
स्वर्गं च सो यास्यति शीघ्रमेवम् ॥

यो लोकनाथस्य हि नामु यः श्रुणे
दृढप्रतिज्ञो बहुकल्पकोटिभिः ।
महानुभावो सुगतो महात्मनः
कल्पानकोटीनयुतानचिन्तियान् ॥

1 Ms. भयभोन्  2 Ms. विहारम्  3 Ms. यत्तस्य

सो बोधिसत्त्वो स्थित गङ्गवालुकान्
कदाचि सो गच्छति दुर्गती भयम् ।
यो लोकनाथस्य हि नामु यः श्रुणे
अपायगामी न कदाचि भेष्यते ॥
कल्पानकोटीनयुतानचिन्तिया
राजा स भोती सद चक्रवर्ती ।
यो लोकनाथस्य हि नामु धारयेत्[1] ॥
यत् किंचि पूर्वं सद पापु यत् कृतं
सर्वं क्षयं यास्यति शीघ्रमेतत् ।
शक्रोपि देवेन्द्रमहानुभावो
कल्पानकोटीनयुतानचिन्तिया ॥
सुखावतीं गच्छति बुद्धक्षेत्रं
पर्यङ्कबद्धो स च बोधिसत्त्वो ।
ब्रह्मस्वरो सुस्वरु मंजुघोष
भवन्ति वर्षानसहस्रकोटिभिः ॥
अपायगामी न कदाचि भेष्यते
यो लोकनाथस्य हि नामु धारयेत् ।

अथ स जीर्णकः पुरुषो जनकायं भगवतो गुणवर्णमुदीरयित्वा तूष्णीं स्थितोऽभूत् । अथ भगवान् पूर्वेण नगरद्वारेण श्रावस्तीं महानगरीं प्रविष्टो[2]ऽभूत् । तत्र च नगरद्वारे द्वादशकोट्यः पद्मानां प्रादुरभूवन् । तेषु च पद्मेषु द्वादशकोट्यो बोधिसत्त्वानां पर्यङ्क-

1 One pāda wanting ?

2 Ms. प्रविष्ट

निषण्णाः प्रादुरभूवन् प्राञ्जलयः। अथ भगवतः[1] प्रविष्टमात्रेण श्रावस्त्यां महानगर्यां नवनवतिकोटीनियुतशतसहस्राणि सत्त्वानां सुखावत्यां लोकधातौ प्रतिष्ठापितानि चतुरशीतिसत्त्वकोटीनियुतशतसहस्राण्याभिरत्या लो[कधातो]रक्षोभ्यतथागतस्य बुद्धक्षेत्रे प्रतिष्ठापितानि।

अथ भगवान् आ[नन्देन सह नगर]वलम्बिकाया दारिकाया गृहे समागतोऽभूत्। अथ भगवान् नगरवलम्बिकाया दारिकाया गृहे चक्रिकं कटकटापयामास[2]। अथ सा दारिका तं चक्रीशब्दं श्रुत्वा संशयजाताभूत्। को हेतुः कः प्रत्ययः। मम गृहे न कदाचित् पिण्डपातिक[3] आगतोऽभूत्। अथ स नगरवलम्बिका दारिका शून्याकारगृहे निषण्णा अश्रुकण्ठी रुदन्ती[4] परिदेवन्ती स्थिताभूत् तीक्ष्णधारमसिं गवेषन्ती परिदेवन्ती रुदन्ती स्थिताभूत्। अथ [सा] दारिका शून्याकारगृहे निषण्णा परिदेवन्ती अश्रु[कण्ठी] रुदन्ती गाथाभिरध्यभाषत।

अहो बत दुःखु दरिद्रके गृहे
वरं मम मरणु न चापि जीवितम्।
किं चापि मे कायुषु जीवितेन
यद्यैवाहं दुःखु शरीर पीडितम्॥

केन.........................ह्यत्राणं भवते परायणम्।
अनाथभूता अहमद्यमेव यद्यैवाहं जात दरिद्रके गृहे॥

3 Ms. भगवान्
2 Ms. कटकटीमयमास
3 Ms. adds गृहम्
4 For रुदती

अथ स नगरवलम्बिका दारिका शून्याकारगृहे [निषण्णा] इमा गाथा भाषित्वा तूष्णीं स्थिताभूत्।

अथ शुद्धवासकायिको देवपुत्रोऽन्तरीक्षगतः स्थितश्चिन्तयति स्म। पश्येत्त्वं दिमां[1] भगवान्। अनेकदुष्करकोटिनियुतशतसहस्रचीर्णचरितः स शाक्यमुनिस्तथागतो नगरवलम्बिकाया दारिकाया गृहे स्थितोऽभूत्। अथ शुद्धवासकायिको देवपुत्रः शतसहस्रमूल्यं[2] मुक्ताहारं गृहीत्वा शतरसभोजनपिटकं गृहीत्वा काशिकानि वस्त्राणि गृहीत्वा येन नगरवलम्बिकाया दारिकाया गृहं तेनोपसंक्रान्तोऽभूत्। अथ शुद्धवासकायिको देवपुत्रो नगरवलम्बिकां दारिकामेवमाह। प्रावर दारिके इमानि काशिकानि वस्त्राणि इमान्यनेकशतसहस्रमूल्यान्याभरणानि। प्रावृत्य[3] चेदं[4] शतसहस्रमूल्यं मुक्ताहारं गृहीत्वा इमं शतरसभोजनपिटकं गृहीत्वा भगवन्तमुपनामय। अथ सा दारिका तानि काशिकानि वस्त्राणि प्रावृत्य[5] शतसहस्रमूल्यं मुक्ताहारं गृहीत्वा तं शतरसभोजनपिटकं गृहीत्वा येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवन्तमुपनामयति स्म। अथ भगवान् तां नगरवलम्बिकामेवमाह। परिणामय त्वं दारिके यथा परिणामितं विपश्यिशिखिविश्वभुक्ककुत्सुन्दकनकमुनिकाश्यपप्रभृतिभिः सद्भिस्तथागतैरर्हद्भिः सम्यक्सम्बुद्धैः[6]। अन्तो भविष्यति स्त्रीभावादन्तो भविष्यति दरिद्रगृहात्। अथ सा दारिका तं पिण्डपातं परिणामयित्वा

1 Ms. पश्यथ इमां 2 Ms. अन्यं 3 Ms. प्रावरित्वा 4 Ms. अयं
5 Ms. प्रावरित्वा 6 Ms. adds परिणामितं तथा परिणामय

भगवन्तमुपनामयामास। अनेन पिण्डपातकुशलमूलेन मा कस्मिंश्चिद्[1] दरिद्रगृहे उपपद्येय।

अथ सा नगरवलम्बिका दारिका तं पिण्डपातं परिणामयित्वा भगवते दत्त्वा स्वगृहगमनमारब्धा। अथ भगवान् तां नगर-वलम्बिकां दारिकामेवमाह। प्रतिनिवर्तस्व[2] दारिके। पूर्व-जातिनिदानं समनुस्मरामि। तदहं प[रिकीर्त]यिष्यामि। अथ सा दारिका प्रतिनिवृत्य[3] सर्वाङ्गप्रणि[पातेन] भगवन्तं प्रपतिता। अथ सा नगरवलम्बिका दारिका भगव[न्तं गा]थाभिरध्यभाषत।

अवश्यं मे पूर्वकृतेन कर्मणा
येनाहं [जात] दरिद्रके गृहे।
करोहि कारुण्य ममं हि दुःखित
[विनिवर्तयस्व] नरका हि पालान्॥
करोहि कारुण्य मम दुःखिताया
इस्त्रिभावा उपपन्नु नायक।
त्वं लोकनाथ जरव्याधिशोक
विमोचये मं मम दुःखितायाः॥
त्राणं भवाही शरणं परायणं
विमोचयाही मम दुःखितायाः।
कृतं हि नाथ प्रणिधिं त्वया हि
ये केचि सत्त्वा इह जम्बुद्वीपे॥

1 Ms. कश्चिद        2 Ms. प्रतिनिवर्तत्वं        3 Ms. प्रतिनिवर्त्य

तिष्ठन्ति ये वै दशसु दिशासु
सत्त्वा हि सर्वे सुखिता [करि]ष्ये ।
सर्वे च हं मोचयि दुःखसागरात्
त्राणं भवाही श[रणं पराय]णम् ॥
त्वयं हि नाथ मयि मोचयी जगत्
अवश्यं मे पूर्वकृ[तेन] कर्मणा ।
येनाहं जातु दरिद्रके गृहे
त्राणं भवाही मम [ दुःखितायाः ] ॥
[भवं] तु नाथ जरव्याधिमोचकं
त्राणं भवाही गुण संचि[ताग्र] ।
न चा करिष्ये पुनरेव पापं
यद्वेदयामी इमि वेदनानि ॥
कृपं जनि........मग्न सत्त्वा
त्राणं भवाही शरणं परायणम् ।
ये केचि सत्त्वा इह जम्बुद्वीपे
नामं च वै धारय पश्च काले ॥
परिनिर्वृ तस्य तत पश्चकाले
भविष्यति शासनविप्रलोपम् ।
यत्किंचि पापं तदपूर्व यत् कृतं
सर्वं क्षयं यास्यति शीघ्रमे[त]त् ॥

अथ सा नगरवलम्बिका दारिका भगवन्तं गाथा भाषित्वा पु[नरपि] गृहगमनमारब्धा। अथ भगवान् तां नगरवलम्बिकां

[दारिकां कल]विङ्करुतस्वरनिर्घोषेणैवमाह । प्रतिनिवर्तस्व[1] [दारिके पूर्वजातिनिदानं स]मनुस्मरामि तदहं परिकीर्तयिष्यामि । [अथ सा दारिका] [2]प्रतिनिवृत्यैवमाह ।

परिकीर्तय लोकविनायकाद्य
  य[द्‌यत् कृतं] पाप सदा सुदारुणम् ।
अवश्य मे पापु कृतं सुदारुणं
  येना[हं जातु] दरिद्रके गृहे ॥
त्वं सार्थवाहु इह सर्वलोके
  विमोचये मं इह इस्त्रिभावा ।
त्राणं भवाही शरणं परायणं
  कृतज्ञहं नित्य भवामि नायके ॥
संश्रावये मं इमु धर्मनेत्री
  नासौ कदाचित्तजते अपायम् ।
संशोधयी कर्म यथाकृतं मया
  त्राणं भवाही शरणं परायणम् ॥
असङ्गज्ञानी वरलोकनायक
  वन्दामि नाथ शरणं कृताञ्जली ॥

अथ भगवान् तां दारिकामेवमाह । भूतपूर्वो दारिके अतीतेऽध्वनि असंख्येयैः कल्पै रत्नशिखी नाम तथागतोऽर्हन् सम्यक्-सम्बुद्धो विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्य-सारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तेन

1 Ms. प्रतिनिवर्तत्वं    2 Ms. प्रतिनिवर्त्यैव॰

खलु पुनः समयेन पद्मावती नाम राजधान्यभूत्[1]। तेन खलु पुनः समयेन पद्मावत्यां राजधान्यां पद्मप्रभो नाम गृहपतिरभूत्[2]। तस्य पद्मप्रभस्य गृहपतेस्त्वं [दुहि]ताऽभूः[3]। तेन खलु पुनः समयेन ग्रामनगरनिगमजनपदेषु पिण्डपातिको भिक्षुः पिण्डपातायावतरति। यदा[4] त्वद्गृहमागतोऽभूत्[5] तदा त्वं दारिके पिण्डपातं गृहीत्वा गृहान्निष्क्रान्ता पुनरेव प्रविष्टाऽभूः[6]। न चाहं मुण्डितशिरसोऽधन्यस्य पिण्डपातं दास्यामि। तेन कर्मोपचयेन त्वया[7] दारिके द्वादशकल्पसहस्राणि पुनः पुनर्दरिद्रगृहे दुःखान्यनुभूतानि[8]। एकेन त्वया दारिके कुशलमूलेन बोधिव्याकरणं प्रतिलप्स्यसे। यत्त्वया तस्य भिक्षो रूपलिङ्गसंस्था न दृष्टा[9] भविष्यसि त्वं दारिके अनागतेऽध्वनि अचिन्त्यैरपरिमाणैः कल्पैर्नगरध्वजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् लोके[10]। अथ सा दारिका भगवन्तं त्रिः प्रदक्षिणं कृत्वैवमाह। कीदृशं भगवन् मम बुद्धक्षेत्रं भविष्यति यत्रैवाहं बुद्धो भविष्यामि। भगवानाह। अपरिमितगुणसंचया नाम सा बुद्धक्षेत्रं भविष्यति। यादृशी च सा सुखावती लोकधातुः तादृशं तद्बुद्धक्षेत्रं भविष्यति। पर्यङ्कनिषण्णा आर्योपपादुका बोधिसत्त्वा भविष्यन्ति। ईदृशं तद्बुद्धक्षेत्रम्।

1 Ms. ०धानीरभूत्

2 Ms. ०रभूवन्  3 तरमभूवन्  4 Ms. तदा

5 Ms. त्वं गृहमागतमभुवन्  6 Ms. ०भूत्  7 Ms. त्वं

8 Ms. दुःखमनुभूतानि  9 Ms. दृष्ट्वा  10 Ms. adds भविष्यामि

अथ च सा दारिका तुष्टा उदग्रा आत्तमनाः प्रमुदिता प्रीतिसौमनस्यजाता स्वगृहगमनमारब्धा। अथ भगवांस्तां दारिकामेवमाह। त्वं दारिके सप्तमे दिवसे कालं करिष्यसि। कालं कृत्वा। पूर्वस्यान्दिशि मगधविषये राजा अजितसेनो नाम। तस्य राज्ञोऽजितसेनस्य अन्तःपुरसहस्रमस्ति। तस्य खलु पुना[1] राज्ञोऽजितसेनस्य पुत्रो जनिष्यसे[2]। एष एव तव पश्चिमो गर्भवासो भविष्यति।

अथ भगवान् पश्चिमकेन नगरद्वारेण श्रावस्त्या महानगर्या निष्क्रान्तो येन जेतवनं विहारस्तेनोपसंक्रान्तः[3]। अथायुष्मानानन्दो भगवन्तं दूरत एवागच्छन्तं दृष्ट्वा पादौ शिरसाभिवन्द्य त्रिः प्रदक्षिणीकृत्य भगवन्तं गाथाभिरध्यभाषत।

सुवर्णवर्णं वरलक्षणार्चितं
द्वाविंशतिलक्षणरूपधारिणम्।
यदा त्वया आगतु पिण्डपातिका
विमोचयित्वा इह सर्वसत्त्वा॥
सुखेन संस्थापयि सर्वसत्त्वा
मैत्रीबलं सर्वजगत्त्वया कृतम्।
स पिण्डपातं वरमाण्डनायक
विमोचितस्ते जगती भया च॥
ये बोधिसत्त्वा इह जम्बुद्वीपे
सर्वे च मार्गं तव दर्शयन्ति।

1 Ms. पुन 2 Ms. जास्यसि 3 Ms. विहारं तेनो०

परिनिर्वृतस्य सद पश्चकाले
धारेतु सूत्रं इमु बुद्धवर्णितम् ॥
परिनिर्वृतस्य तव पश्चकाले
भविष्यति शासनविप्रलोपम् ।
इमं नयं धारयि सूत्ररत्नम् ॥

अथायुष्मानानन्द इमा गाथा भाषित्वा भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतः पुरतस्तस्थौ[1] । अथ भगवानायुष्मन्तमानन्दमामन्त्रयते स्म । गच्छानन्द[2] गण्डीमाकोटय । ते श्रावकाः परिभोक्ष्यन्ति पिण्डपातम् । अथायुष्मानानन्दो भगवन्तमामन्त्रयते स्म । कीदृशं भगवन् गण्डीशब्दस्य कुशलमूलं भविष्यति । भगवानाह । शृणु आनन्द[3] गण्डीशब्दस्य कुशलमूलं परिकीर्तयामि । ये केचिदानन्द गण्डीशब्दं श्रोष्यन्ति तेषां पञ्चानन्तर्याणि कृत्यानि परिक्षयं यास्यन्ति । अवैवर्तिकास्ते भविष्यन्ति क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते[4] । आनन्द आह । कीदृशं भगवंस्तैः सत्त्वैः कुशलमूलमवरोपितम्[5] । भगवानाह । शृणु आनन्द[6] ये सत्त्वाः पश्चिमे काले पश्चिमे समये मम परिनिर्वृतस्य सद्धर्मविप्रलोपे वर्तमाने सद्धर्मस्यान्तर्धानकालसमये ग्रामनगरनिगमजनपदराष्ट्रराजधानीषु ये सत्त्वा [वा] अरण्यायतने [7]गण्ड्याकोटनशब्दं श्रोष्यन्ति नमो बुद्धायेति करिष्यन्ति तेषां पञ्चानन्तर्याणि कर्माणि परिक्षयं

1 Ms. °स्तस्थुः
2 Ms. गच्छमानन्द
3 Ms. गच्छमानन्द
4 Ms. °स्यन्ति
5 Ms. °मवरुप्तम्
6 Ms. रानन्द
7 Ms. गण्डीमाकोटन°

यास्यन्ति । ईदृशान्यानन्द[1] गण्डीशब्दस्य कुशलमूलानि । अथायुष्मानानन्दः शान्तप्रशान्तेन गण्डीमाकोटयते स्म । अथ तेन गण्डीशब्देन सर्वे ते महाश्रावकाः सन्निपतिता अभूवन् । यथा यथा आसने निषण्णाः पिण्डपातं परिभुञ्जन्ते[2] स्म । अथ तत्रैव श्रावकमध्ये नन्दिमित्रो नाम महाश्रावकः सन्निपतितोऽभूत् सन्निषण्णः । अथ भगवानायुष्मन्तं नन्दिमित्रं महाश्रावकमामन्त्रयते स्म । गच्छ त्वं नन्दिमित्र महाश्रावक पूर्वस्यान्दिशि मगधविषये राज्ञोऽजितसेनस्य[3] कल्याणमित्रपरिचर्यां कुरु । अथ नन्दिमित्रो महाश्रावको भगवन्तमेवमाह । न भगवन् शक्ष्यामस्तं पृथिवीप्रदेशं गन्तुम् । दुरासदास्ते सत्त्वाः । ते मां[4] जीविताद्व्यवरोपयिष्यन्ति । अथ भगवानायुष्मन्तं तं नन्दिमित्रं महाश्रावकमेवमाह । न ते सत्त्वास्ते[5] शक्ष्यन्ते बालाग्रमपि कम्पयितुं[6] प्रागेव जीविताद्व्यवरोपयितुम् । अथ नन्दिमित्रो महाश्रावकः प्रत्यूषकालसमये सुवर्णवर्णं वस्त्रं प्रावृत्य[7] येन पूर्वस्यान्दिशि मगधविषये राज्ञोऽजितसेनस्य राजधानी [8]तेनानुक्रान्तोऽभूत् । अथ राजा अजितसेनस्तं नन्दिमित्रं महाश्रावकं दृष्ट्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातोऽभूत् । अथ राज्ञाजितसेनेन अमात्यः प्रेषितोऽभूत् । [9]गच्छैनं भिक्षुमानय[9] । तदा सोऽमात्यो येन नन्दिमित्रो महाश्रावक-

1 Ms. ईदृशमानन्द

2 *Parasmaipada* has also been used elsewhere.

3 Ms. राजानमजित०

4 Ms. मम

5 Ms. ०स्तं

6 Ms. कपयितु

7 Ms. प्रावरित्वा

8 Ms. मनुकान्तो

9...9 Ms. गच्छार्यं भिक्षुरानयेत ।

स्तेनोपसंक्रान्तः। अथ सोऽमात्यो नन्दिमित्रं महाश्रावकमेवमाह। आगच्छ महाश्रावक भिक्षो राजा ते आज्ञापयति। अथ नन्दिमित्रो महाश्रावकोऽमात्यमेवमाह। मम राज्ञा किं कार्यं मम राजा किं करिष्यति। अथामात्यो येन राजाजितसेनस्तेनोपसंक्रान्तः। तं राजानमजितसेनमेवमाह[1]। न च स भिक्षुस्तव पार्श्वे आगच्छति। अथ राज्ञाजितसेनेन पञ्चामात्यशतानि प्रेषितानि। न च स भिक्षू राज्ञो[2]ऽजितसेनस्य पार्श्वमागच्छति। अथ स राजा स्वकेनैवात्मभावेन येन स नन्दिमित्रमहाश्रावकस्तेनोपसंक्रान्तः। उपसंक्रम्य कृताञ्जलिरेवमाह। आगच्छ भो भिक्षो मम राजधानीं प्रविश। अथ राजा अजितसेनो दक्षिणहस्ते तं भिक्षुं गृहीत्वा[3] स्वकां राजधानीं प्रविष्टोऽभूत्। अथ राज्ञाजितसेनेन नन्दिमित्रस्य भिक्षोः सिंहासनं दत्तमभूत्। अथ राजाजितसेनो[4] भद्रपीठके निषद्य[5] तं नन्दिमित्रं महाश्रावकमेवमाह। कुत्र त्वं भिक्षो गच्छसि। को हेतुः कः प्रत्ययः। अथ नन्दिमित्रो महाश्रावको राजानमजितसेनमेवमाह। ये केचिद् भिक्षुप्रव्रजितास्ते सर्वे भिक्षाहाराः पिण्डपातमवचरन्तः परिभुञ्जन्ति। अथ राजा अजितसेनस्तं नन्दिमित्रं महाश्रावकमेवमाह। परिभुङ्क्ष्व[6] मम गृहे पिण्डपातम्। यावज्जीवं पिण्डपातं प्रदास्यामि। यदि ते[7] भिक्षो मम स्वमांसेन कार्यं स्वमांसं दास्यामि। अथ नन्दिमित्रो महाश्रावको राजानमजितसेनं[8] गाथाभिरध्यभाषत।

1 Ms. राजाजितसेन एवमाह
2 Ms. राजानं
3 Ms. गृह्य
4 Ms. ०सेनेन
5 Ms. निषीदित्वा
6 Ms. परिभुञ्जस्व
7 Ms. त्वं
8 Ms. ०सेनस्य

भुंजामि तद्भोजनु यद् ददाहि
मृष्टान्नपानं रसपानमुत्तमम् ।
क्लेशा हि निर्मुक्त त्वया भविष्यसि
सुदुर्लभं लब्ध मनुष्यलाभम् ॥

सुदुर्लभं शासनु नायकस्य
श्रद्धाप्रसादं परमं सुदुर्लभम् ।
ये शासने प्र[व्र]जिता च भिक्षवा
सुदुर्लभं शासनु नायकानाम् ॥

सुदुर्लभं सुगतवरस्य दर्शनं
नमोऽस्तु ते बुद्ध महानुभावो ।
नमोऽस्तु ते धर्ममयं महामुने
नमोऽस्तु ते क्लेशविचक्षणार्यम् ॥

नमोऽस्तु ते सर्वजरप्रमोक्षणात्
नमोऽस्तु ते मार्गनिदर्शनार्यम् ।
नमोऽस्तु ते मार्गपथस्य दर्शकं
नमोऽस्तु ते बोधिपथस्य दर्शकम् ॥

अथ नन्दिमित्रो महाश्रावको राजानमजितसेनं भगवतो गुणवर्णमुदीरयित्वा तूष्णीं स्थितोऽभूत् । अथ राजानमजितसेनं तं नन्दिमित्रो महाश्रावको गाथाभिरध्यभाषत ।

सुदुर्लभं भिक्षु तथैव दर्शनं
सुदुर्लभं तस्य भवेय दर्शनम् ।

ये भिक्षुसंघस्य ददेय दानं
न तस्य यक्षा न च राक्षसाश्च ॥
न प्रेतकुष्माण्डमहोरगाश्च
विघ्नं न कुर्वन्ति कदाचि तेषाम् ।
ये भिक्षुसंघाय ददन्ति दानं
सुदुर्लभं तस्य मनुष्यलाभम् ॥
यो दुर्लभं दर्शनु भिक्षुभावं
सुदुर्लभं कल्पशतैरचिन्तियैः ।
यो लोकनाथस्य हि नामु धारये
कल्पान कोटीनयुतानचिन्तिया ॥
न जातु गच्छे विनिपातदुर्गतिं
यो ईदृशं पश्यति भिक्षुराजम् ।
न तस्य भोती विनिपातदुर्गतिं
यो ईदृशं पश्यति भिक्षुराजम् ॥
कल्याणमित्रं मम मार्गदर्शको
(यं) स आगताये मम पिण्डपातिका ।
यो दास्यते अस्य हि पिण्डपातं
मुक्ता न भेष्यंति जरार्तव्याधया ॥
क्लेशा विनिर्मुक्त सदा तु भेष्यति
ये तस्य दास्यन्तिह पिण्डपातम् ॥

अथ स राजा अजितसेनो नन्दिमित्रं महाश्रावकं गुणवर्णमुदीरयित्वा तूष्णीं स्थितोऽभूत् । अथ नन्दिमित्रो महाश्रावको

राजानमजितसेनमेवमाह । एवमस्तु महाराज भुञ्जे[1] पिण्डपात तव गृहे । अथ राजा अजितसेनः खादनीयेन भोजनीयेन तं नन्दिमित्रमहाश्रावकं सन्तर्पयति स्म ।

अथ नन्दिमित्रमहाश्रावको राजानमजितसेनमेवमाह[2] । किं तव महाराज अस्मिन् पृथिवीप्रदेशे उद्यानभूमिरस्ति । राजा आह । अस्ति महाश्रावक उद्यानभूमिर्मम रमणीया[3] सुशोभना[4] । नन्दिमित्र आह । गच्छाम्यहं महाराज । तामुद्यानभूमिं[5] प्रेक्षे[6] । राजा आह । गच्छ नन्दिमित्र । उद्यानभूमिं प्रेक्षस्व । अथ नन्दिमित्रमहाश्रावको येन राज्ञोऽजितसेनस्योद्यानभूमिस्तेनोपसंक्रान्तः । अथ तत्रोद्यानभूमौ[7] ये उद्यानगुणास्ते सर्वे सन्तीति[8] । [9]या ग्रैष्मिक्यः पुष्करिण्यस्ताः[9] शीतलजलपरिपूर्णा या[10] वार्षिक्यस्ता[11] नात्युष्णा नातिशीतलजलपरिपूर्णाः । [12]ताश्च पुष्करिण्यः[12] सुवर्णसोपानसंच्छन्ना दिव्या[13] रमणीयाः[14] । ये च जांबूपकपरिभोगगुणास्ते[15] सर्वे सन्तीति[16] । अधिमुक्तकचम्पकाशोकमुचिलिन्दपाटलसुमनासौगन्धिकपुष्पाणि सन्तीति[17] ।

1 Ms. भुञ्जामि
2 Ms. ०सेनस्यैवमाह
3 Ms. रमणीयं
4 Ms. सुशोभनं
5 Ms. तमुद्यान०
6 Ms. प्रेक्षामि
7 Ms. ०भूमे
8 Ms. अस्तीति
9...9 Ms. ये ग्रीष्मिका पुष्किरिणया ते
10 Ms. ये
11 Ms. वर्षिका ते
12...12 Ms. ते च पुष्किरिणया
13 Ms. दिव्यानि
14 Ms. रमणीयानि
15 Ms. ०गुणानि ते
16 Ms. अस्तीति
17 Ms. अस्तीति

ये तिर्यग्योनिगताः पक्षिणः शुकशारिकाचक्रवाकमयूरकोकिलादयस्ते[1] नानारुतानि कुर्वन्ति स्म। अथ तत्रैव उद्यानभूमौ सुवर्णवर्णाः सुवर्णतुण्डाः[2] सुवर्णपक्षाः सुवर्णपादाः पक्षिणः प्रादुर्भूताः। ते सर्वे बुद्धशब्दं निश्चारयन्ति। अथ नन्दिमित्रमहाश्रावको येन राज्ञोऽजितसेनस्य राजधानी तेनोपसंक्रान्तः। अथ राजा अजितसेनस्तं नन्दिमित्रं महाश्रावकमेवमाह। आगतस्त्वं महाश्रावक। दृष्टोद्यानभूमिः। नन्दिमित्र आह। दृष्टा मयोद्यानभूमी रमणीया सुशोभना। अथ नन्दिमित्रं महाश्रावकं राजा अजितसेनो गाथाभिरध्यभाषत।

ये जम्बुद्वीपे परिभोगमासी
अधिमुक्तकचम्पकधानुष्कारिका।
अशोकमुचिलिन्द तथैव पाटला
सौगन्धिकाश्च सुमना च वार्षिका॥
तदा पारियात्रा नदीतीरनिर्मिता
सुवर्णवर्णा सद पक्षिणा अभूत्।
मार्गं च ते दर्शयि अग्रबोधये
दिव्या मनोज्ञा मधुरस्वरांश्च
संश्रावयिष्यन्ति च नित्यकालम्॥

अथ नन्दिमित्रमहाश्रावको राज्ञोऽजितसेनस्य गाथा भाषित्वा तूष्णीं स्थितोऽभूत्। अथ राजा अजितसेनो भेरीं पराहन्ते[3] स्म।

1 Ms. ०कोकिलादीनि ते 2 Ms. ०तुराडी
3 Ms. ०हनन्ते

अथ तेन भेरीशब्देन समेत्यामात्यगणस्तं राजानमजितसेनमेवमाह। कस्यार्थे महाराज भेरी[1] पराहता[2]। अथ स राजा आह। हस्तिरथं च अश्वरथं च सज्जं[3] कृतं स्यात्। अहमुद्यानभूमिं गमिष्यामि क्रीडनार्थाय। अथ ता[4] अमात्यकोट्यो वचनं श्रुत्वा शीघ्रमेव तद्[5] हस्तिरथमश्वरथं सज्जं[6] कृतवत्यः[7]। अथ तेन क्षणलवमुहूर्तमात्रेण राजाजितसेनो येन सोद्यानभूमिस्तेनोपसंक्रान्तः। स च नन्दिमित्रमहाश्रावकस्तेनैवोपसंक्रान्तो राजानमजितसेनमेवमाह[8]। अस्मिन् पृथिवीप्रदेशे महाराज मम कुटिकं[9] कारयितव्यम् यत्राहं सन्निषण्णस्तव गृहे पिण्डपातं परिभोक्ष्यामि। अथ राजा अजितसेनो नन्दिमित्रमहाश्रावकमेवमाह। कीदृशं तव कुटिकं कारयितव्यम्[10]। नन्दिमित्र आह। यादृशास्तव महाराज महाचित्तोत्पादश्रद्धाप्रसादास्तादृशं कुटिकं कारय[11]। अथ राजा अजितसेनो ज्येष्ठामात्यमेवमाह। अस्मिन्नेव पृथिवीप्रदेशे कुटिकं कारय। अथ ज्येष्ठामात्यो राजानमेवमाह। कीदृशं महाराज कुटिकं कारयामि। राजा अजितसेन एवमाह। त्रिंशद्योजनानि दीर्घेण षड्योजनान्यूर्ध्वायां सप्तरत्नमयं मणिमुक्तिसंच्छादितं कुटिकं[12] कारय। अथ सोऽमात्यः कुटिकं कारयति[13]। सप्तरत्नमयं

1 Ms. भेरीं
2 Ms. ०हताः
3 Ms. सद्य
4 Ms. ते
5 Ms. तं
6 Ms. सद्य
7 Ms. कृतवान्
8 Ms. ०सेनस्यैवमाह
9 Ms. कुटिं
10 Ms. कारापयितव्यं
11 Ms. कारापय
12 Ms. कोटिं
13 Ms. कारापयति

मणिमुक्तिसंच्छादितं कारयित्वा[1] येन राजा अजितसेनस्तेनोपसंक्रान्तो राजानमजितसेनमेवमाह। कृतं महाराज मया कुटिकं यादृशमाज्ञप्तम्। राजा आह। तत्रैव पृथिवीप्रदेशो चंक्रमः कारयितव्यश्चतुर्योजनानि दीर्घेण द्वे योजने विस्तारेण। अथ सोऽमात्यस्तं चंक्रमं कारायित्वा येन राजा अजितसेनस्तेनोपसंक्रान्तो राजानं गाथाभिरध्यभाषत।

कृतं मया चंक्रमु सुष्ठु शोभनं
आज्ञा त्वया यत् कृतपूर्वमेव च।
सत्त्वान मोचेति प्रकृतिं शुभाशुभं
विमोचये प्राणिन सर्वमेतत्॥
अहो सुलब्धा प्रणिधीकृतं त्वया
विमोचयी सर्वजगत् सदेवकम्।
प्रणिधिं कृतं यत्त्वयमीदृशं भवे
धर्मं प्रकाशेति मि धर्मभाणको॥
निषण्ण स्थित्वा कुटिका च चंक्रमे
आज्ञा कृतं यत् त्वय यादृशी कृता।
स चंक्रमं चैव कृतं सुशोभनं
मणिरत्नसंच्छादित तं च भूमिम्[2]॥

अथ राजा अजितसेनो येन स्वका[3] राजधानी[4] तेनोपसंक्रान्तः। अथ नन्दिमित्रमहाश्रावकः प्रतिनिवृत्य तत्रैव

1 Ms. कारापयित्वा

2 Ms. adds सुशोभनं कृतु अयं च भूमि ईदृशामिति

3 Ms. स्वकं

4 Ms. ०धानीं

कुटिके निषण्णो विकिरणं नाम बोधिसत्त्वसमाधिं समापन्नोऽभूत् । अन्येन केशानन्येन[1] नयनान्यन्येन दन्तानन्येन[2] ग्रीवा अन्येन बाहू[3] अन्येन हृदयमन्येनोदरमन्येनोरू अन्येन जङ्घे[4] अन्येन पादौ[5] समापन्नोऽभूत् । अथ स राजा अजितसेनः सप्ताहस्यात्ययेन तं[6] भिक्षुं न पश्यति[7] ।

अथ राजा ज्येष्ठकुमारमेवमाह । आगच्छ कुलपुत्र गमिष्यामि तां कुटिकाम् । येन स भिक्षुस्तेनोपसंक्रमिष्यामि । अथ स राजा सपुत्रो येन सा कुटिका तेनोपसंक्रान्तोऽभूत्[8] । अथ स राजा अजितसेनस्तं भिक्षुमात्मभावं खण्डं खण्डं कृतं दृष्ट्वा संशयजातोऽभूत् । संत्रस्तरोमकूपजातो वस्त्राणि पाटयन्[9] परिदेवन्[10] रुदन्[11] अश्रुकण्ठः पुत्रमेवमाह । आनय[12] पुत्र तीक्ष्णधारमसिम् । आत्मानं जीविताद् व्यवरोपयिष्यामि । अथ स राजकुमारः प्रांजलिं कृत्वा राजानं गाथाभिरध्यभाषत ।

मा शोकचित्तस्य भवे नृपेन्द्र
मा वेदयी वेदनमीदृशानि ।
आत्मघातं करित्वा तु निरये त्वं गमिष्यसि ।
रौरवं नरकं चापि गमिष्यसि सुदारुणम् ॥
दक्षिणीयो अयं लोके जरव्याधिप्रमोचकः ।

1 Ms. केशा अन्येन
2 Ms. दन्ता अन्येन
3 Ms. बाहूनि
4 Ms. जङ्घानि
5 Ms. पादानि
6 Ms. स
7 Ms. पश्यते
8 Ms. ०संक्रान्तारभूवन्
9 Ms. पाटयत
10 Ms. परिदेवन्त
11 Ms. रुदन्त
12 Ms. आनेथ

न चायं घातितो यक्षैर्न भूतैर्न च राक्षसैः ।
बोधिसत्त्वोऽप्ययं लोके जरव्याधिप्रमोचकः ॥
दक्षिणीयो अयं लोके जरव्याधिप्रमोचकः ।
दुर्लभो दर्शनं अस्य बोधिमार्गस्य दर्शकः ॥
कल्याणमित्रमयं आसी तव कारणमागतम् ।
दक्षिणीयो अयं लोके सर्वसत्त्वसुखावहम् ॥
सर्वज्ञं पारमिप्राप्तं लोकनाथेन प्रेषितम् ।
दृढवीर्यं दृढस्थामं लोकनाथं महर्षिणम् ॥
यो नाम तस्य धारेति नासौ गच्छाति दुर्गतिम् ।
अपायं न गामिष्यन्ति स्वर्गलोकोपपत्तये ॥

अथ स राजकुमारस्तं पितरं गाथा भाषित्वा तूष्णीं स्थितोऽभूत्। अथ राजा अजितसेनः स्वकं पुत्रमेवमाह । कथं त्वं कुमार जानीषे यदयं भिक्षुः समाधिं समापन्नोऽभूत्। अथ स राजकुमार एवमाह । पश्य[1] महाराज अयं[2] भिक्षुर्बोधिसत्त्वसमाधिं समापन्नः सर्वक्लेशविनिर्मुक्तो भवसागरपारंगतः[3] सर्वसत्त्वहितार्थं च मार्गं दर्शयते शुभम्। अथ स राजकुमारो राजानमेवमाह। आगच्छ तात चंक्रमं गमिष्यामः। अथ स राजा स च राजकुमारो बहुभिर्दारकशतैः सार्धं येन स चंक्रमस्तेनोपसंक्रान्तौ। अथ स भिक्षुस्ततः समाधेर्व्युत्थितो राजानमजितसेनमेवमाह। आगच्छ महाराज किं करोष्यस्मिन्[4] स्थाने।

1 Ms. पश्यथ
2 Ms. इदं
3 Ms. ०गता
4 Ms. करोहि इदं

अथ राजा तं भिक्षुं दृष्ट्वा मौलिपट्टं राजकुमारस्य ददाति। तव राज्यं भवतु। धर्मेण पालये नाधर्मेण। राजकुमार आह। बह्वन्यसंख्येयानि राजकार्याणि मया कृतानि। न च कदाचित्तृप्तिरासीत्। तव तात राज्यं भवतु। न मम राज्येन कार्यं न भोगेन नैश्वर्याधिपत्येन कार्यम्। तव राज्यं भवतु तात। धर्मेण पालयें नाधर्मेणेति[1]।

अथ राजा येन स भिक्षुस्तेनोपसंक्रान्तः प्राञ्जलिरेवमाह।

सुदुर्लभं [दर्शन] तुभ्यमार्षाः
कृताञ्जलिः [समभिमुखी] नायकानाम्।
मोक्षागमं दर्शनु तुभ्यमार्षाः
सुदुर्लभं कर्मशतैरचिन्तियैः॥
ये दर्शनं दास्यति तुभ्यमार्षा
मुक्ता च सो भेष्यति कल्पकोटिभिः।
न जातु गच्छे विनिपातदुर्गतिं
यो नामधेयं शृणुते मुहूर्तम्॥

राजा आह।

निषद्य युग्ये रतनामये शुभे
व्रजाम्यहं येन स राजधानीम्।
ददाम्यहं भोजनु सुप्रभूतं
ददाम्यहं काशिकवस्त्रमेतत।

1 Ms. नाधर्मेणमिति

सूक्ष्माणि जालानि च संहितानि
यां चीवरां तुभ्य ददामि अद्य ॥

अथ स भिक्षू रत्नमये युग्ये गृहीत्वा येन राजधानी तेनोपसंक्रान्तः[1] । सन्तर्पितो[2] भोजनेन । अथ नन्दिमित्रमहाश्रावको राजानमजितसेनं गाथाभिरध्यभाषत ।

संतर्पितो भोजन सुप्रभूतं
मृष्टान्नपानरसमुत्तमं शुभम् ।
ये भिक्षुसंघाय ददंति दानं
ते बोधिमण्डेन चिरेण गच्छत ॥
सुदुर्लभं दर्शन नायकस्य न
चिरेण सो गच्छति बुद्धक्षेत्रम् ।
अमितायुषस्य वरबुद्धक्षेत्रे
सुखावतीं गच्छति शीघ्रमेतत् ॥

अथ नन्दिमित्रमहाश्रावकः अजितसेनस्य राज्ञो गाथा भाषित्वा तूष्णीं स्थितोऽभूत् । अथ राजा अजितसेनो भेरीं पराहन्ति[3] स्म । अथ तेन भेरीशब्देन सर्वास्ता अमात्यकोट्यो राजानमेवमाहुः[4] । कस्यार्थे महाराज भेरी पराहता । राजा आह । सप्तमे दिवसे हस्तिरथमश्वरथं सज्जं[5] कृतं स्यात् । अहं सप्तमे दिवसे जेतवनं नाम विहारं गमिष्यामि शाक्यमुनेस्तथागतस्यार्हतः सम्यक्संबुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय धर्म-

1 Ms. ०क्रान्ता 2 Ms. सन्तर्पिता 3 Ms. पराहनन्ते
4 Ms. ०माह 5 Ms. सद्यं

श्रवणाय। अथामात्यकोट्यस्तं[1] राजानमजितसेनमेवमाहुः[2]। कृतमस्माभिः[3] महाराज हस्तिरथमश्वरथं सज्जम्[4]। अथ राजा अजितसेनो हस्तिरथे अवरुह्य तं च नन्दिमित्रमहाश्रावकं रत्नमये रथे अवरोह्य[5] येन जेतवनं [6]विहारस्तेनोपसंक्रान्तः। अथ भगवान् राजानमजितसेनं दूरत एवागच्छन्तं दृष्ट्वा तान् सर्वश्रावकानामन्त्रयत[7]। सर्वैर्नानाऋद्धिविकुर्वितं दर्शयितव्यम्। अथ ते सर्वे महाश्रावका ज्वालामालं नाम बोधिसत्त्वसमाधिं समापन्ना अभूवन्। अथ राजा दूरतस्तं ज्वालामालं दृष्ट्वा नन्दिमित्रमहाश्रावकमेवमाह। कस्यार्थे इमं पर्वतं ज्वालामालीभूतं पश्यामि। नन्दिमित्र आह। अत्र शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धः स्थितिं ध्रियते यापयति धर्मं च देशयति। ते च बोधिसत्त्वा ज्वालामालं नाम बोधिसत्त्वसमाधिं समापन्नाः। अथ राजा अजितसेनो हस्तिरथादवतीर्य पादाभ्यां पुत्रसहस्रेण सार्धं येन भगवांस्तेनोपसंक्रान्तः। अथ भगवान् सुवर्णवर्णेन कायेन व्यामप्रभया[8] चंक्रमते स्म। अथ राजा अजितसेनो भगवतो रूपवर्णलिंगसंस्थानं दृष्ट्वा मूर्च्छित्वा धरणितले निपतितः। अथ भगवान् सुवर्णवर्णं बाहुं प्रसार्य तं राजानमुत्थापयति स्म। उत्तिष्ठ[9] महाराज कस्यार्थे प्रपतितः। राजा आह।

1 Ms. ०कोट्यो तं
2 Ms. ०माह
3 Ms. कृताऽमाकौ
4 Ms. सद्य
5 Ms. अवरुह्य
6 Ms. विहारं तेनो०
7 Ms. ०मन्त्रयतः
8 Ms. व्यामप्रभाया
9 Ms. उत्थेहि

बहूनि कल्पानि अचिन्तियानि
जातीशताकोटि अचिन्तियानि ।
न मे कदाचिदिह दृष्टरूपं
त्वं लोकनाथो वरदक्षिणीयो ॥
त्वं सार्थवाह जरव्याधिमोचकं
सुवर्णवर्णं वरलक्षणांगम् ।
द्वात्रिंशता लक्षणधारिणं मुने
नासौ कदाचिद्व्रजते अपायभूमिम् ।
यो लोकनाथस्य हि रूपु पश्ये
त्वं लोकनाथा शिरसा नमस्यामी ॥

अथ राजा अजितसेनः कृताञ्जलिः[1] भगवन्तमेवमाह[2] । अहं भगवन् तव शासने प्रव्रजिष्यामि । अथ भगवान् तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः । अलब्धलाभा ये [तत्र] मम शासनं वैस्तारिकं[3] भवति । तं राजानमजितसेनमेवमाह । गच्छ त्वं महाराज स्वगृहे सप्तमे दिवसे आगमिष्यामि ।

अथ राजा अजितसेनस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीति-सौमनस्यजातस्तं[4] कल्याणमित्रं भिक्षुं पुरतःस्थाप्य स्वगृहं गत्वा सर्वानमात्यानामन्त्रयते[5] स्म । सर्वैर्ग्रामनगरनिगमजनपदैः पथं[6] शोधयितव्यं[7] गृहे गृहे ध्वजान्युच्छ्रापितव्यानि[8] गृहे गृहे रत्नमयानि

1 Ms. कृताञ्जलयः 2 Ms. भगवतैवमाह 3 Ms. वैस्तारिकी

4 Ms. ०जातो तं 5 Ms. सर्वेषाममात्यानामामन्त्रयते

6 Ms. पथ in the masculine is found in the *Mahābhārata*.

7 Ms. शोधापयितव्यं 8...8 Ms. ध्वजमुच्छ्रापयितव्या

कुम्भानि[1] परिपूरयितव्यानि । तदा तैः सर्वैरमात्यैराज्ञातम्[2] । सर्व-ग्रामनगरनिगमजनपदैः पथं शोधितं[3] ध्वजान्युच्छ्रापितानि[4] रत्न-मयानि कुम्भानि परिपूरितानि । यत्र राजा अजितसेनः प्रतिवसति तत्र द्वादशकोट्यो ध्वजानामुच्छ्रापिता द्वादशकोट्यो रत्नमयानां कुम्भानां परिपूरिताः[5] । यावत्[6] सप्तमे दिवसे तथागतोऽर्हन् सम्यक्संबुद्धः शारिपुत्रमौद्गल्यायनानन्दपूर्णमैत्रायणीपुत्रप्रमुखै-र्महाश्रावकसंघैः परिवृतः पुरस्कृतः अजितसेनस्य राज्ञो[7] राजधानी-मनुप्राप्तः । अथ राजा अजितसेनः पुष्पपिटकं गृहीत्वा कल्याण-मित्रं पुरतःस्थाप्य भगवन्तं पुष्पैरवकिरन्[8] भगवन्तमेवमाह । अनेन कुशलमूलेन सर्वसत्त्वा अनुत्तरां सम्यक्संबोधिमभि-सम्पद्यन्ते । अथ राज्ञा अजितसेनेन आसनानि प्रज्ञप्तानि । तस्य भगवतः सिंहासनं प्रदत्तम्[9] । अथ भगवान् सिंहासने निषण्णो राज्ञोऽजितसेनस्य[10] धर्मान् देशितवान् । अथ राज्ञा अजितसेनेन प्रभूतेनाहारेण खादनीयेन भोजनीयेन सन्तर्पितः[11] । अथ राजा अजितसेनो ज्येष्ठकं राजकुमारं ददाति । इमं[12] राजकुमारं प्रव्राजय[13] । तदहं पश्चात् प्रव्रजिष्यामि । अथ भगवानायुष्मन्त-मानन्दमामन्त्रयते स्म । गच्छानन्द इमं राजकुमारं प्रव्राजय[14] ।

1 कुम्भ is always found in the neuter.
2 Ms. ०राज्ञातवान्
3 Ms. शोधापितं
4 Ms. ०नुच्छ्रेपिताणि
5 Ms. परिपूर्याणि
6 Ms. याव
7 Ms. राज्ञा
8 Ms. ०किरन्तः
9 Ms. प्रदत्तः
10 Ms. राज्ञ अजित०
11 Ms. सन्तर्पिता
12 Ms. अयं
13 Ms. प्रव्रजापय
14 Ms. प्रव्रजापयात

[1]अथायुष्मतानन्देन स राजकुमारः प्रव्राजितः[1] । सह प्रव्रजितमात्रेण अर्हत्फलं प्राप्तमभूत् । सर्वबुद्धक्षेत्राणि पश्यति स्म । अथ स राजकुमारोऽन्तरीक्षगतस्तं पितरं गाथाभिरध्यभाषत ।

मा विलंब कुरुते तात
मा खेदं किंचि यास्यसि ।
अहो सुलब्धं सुगतान दर्शनं
अहो सुलब्धं सुगतान लाभम् ॥
अहो सुलब्धं परमं हि लाभं
प्रव्रज्यलाभं सुगतेन वर्णितम् ।
संसारमोक्षो सुगतेन वर्णितं
प्रव्रज्य शीघ्रं म विलंब तात ॥
मा खेदयी लोकविनायकेन्द्रं
सुदुर्लभं लब्ध मनुष्यलाभं
सुदुर्लभं दर्शनु नायकानाम् ।
शीघ्रं च प्रव्रज्य मया हि लब्धं
प्राप्तं मया उत्तममग्रबोधिम् ।
श्रुत्वा न राजा तद् पुत्रवाक्यं
स प्रव्रजी[2] शासनि नायकस्य ॥

अथ राजकुमारोऽन्तरीक्षगतो गाथां भाषित्वा तूष्णीं स्थितोऽभूत् । अथ राजा अजितसेनः[3] पुत्रस्य वाक्यं श्रुत्वा तुष्ट उदग्र

1...1 Ms. अथायुष्मानानन्देन तं राजकुमारं प्रव्रजापितः

2 Ms. निष्क्रमी प्रव्रजी

3 Ms. ०सेनेन

आत्त[म]नाः प्रमुदितः [प्रीति]सौमनस्यजातो भगवन्तमुद्दिश्य विहारं कारयति[1] स्म। तूर्यकोट्योऽनुप्रदत्ताः[2]। [3]अन्तःपुर-सहस्रमस्यास्त्रीन्द्रियमन्तर्हितपुरुषेन्द्रियं प्रादुरभूत्[4]। अथ राजा अजितसेनो[5] भगवतः[6] शासने प्रव्रजितोऽभूत्। [7]ताश्चामात्यकोट्यो भगवतः शासने प्रव्रजिता अभूवन्। तच्चान्तःपुरपुरुषसहस्रं[8] प्रव्रजितमभूत्[9]। भगवान् राजानमजितसेनं प्रव्राज्य[10] येन जेतवनं विहारस्तेन गमनमारब्धवान्[11]।

अथायुष्मानानन्दो भगवन्तमेवमाह। अयं राजा अजितसेनो राज्यं परित्यज्य[12] विहारं कारयित्वा भगवतः शासने प्रव्रजितोऽभूत्। अस्य कीदृशं कुशलमूलं भविष्यति। भगवानाह। साधु साधु आनन्द[13] यत्त्वया परिकीर्तितम्। अयं राजा अजित-सेनो मम शासने प्रव्रजितो भविष्यति। अनागतेऽध्वन्यपरिमितैः कल्पैरचिन्त्यैरपरिमाणैरजितप्रभो नाम तथागतोऽर्हन् सम्यक् संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। आनन्द आह। अयं नन्दिमित्रमहाश्रावको राज्ञः[14] कल्याण-मित्रमभूत्। कीदृशं वास्य कुशलमूलं भविष्यति। भगवानाह।

1 Ms. कारापपयते
2 Ms. ०कोट्यमनुप्रदत्तः
3 Ms. अन्तपुरःसहस्रारायस्या०
4 Ms. प्रादुरभूवन्
5 Ms. ०सेन
6 Ms. भगवत
7 Ms. स चामात्य०
8 Ms. सा चान्तपुरःपुरुषसहस्रं
9 Ms. प्रव्रजिता अभूवन्
10 Ms. प्रव्रजापयित्वा
11 Ms. ०मारब्धं
12 Ms. परित्यजित्वा
13 Ms. रानन्द
14 Ms. राजा

अयमानन्द नन्दिमित्रमहाश्रावकस्तत्रैव[1] कालसमये नन्दिप्रभो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके भविष्यति। आनन्द आह। कीदृशं भगवन् तेषां तथागतानां बुद्धक्षेत्रं भविष्यति। भगवानाह। अपरिमितगुणसंचया नाम सा बुद्धक्षेत्रं भविष्यति यत्रेमे तथागता भविष्यन्ति। आनन्द आह। य इमं धर्मपर्यायं सकलं समाप्तं पश्चिमे काले पश्चिमे समये संप्रकाशयिष्यति[2] तस्य कीदृशः[3] पुण्यस्कन्धो[4] भविष्यति। भगवानाह। यदा मयानन्द दुष्करकोटिनियुतशतसहस्राणि चरित्वा बोधिरभिसंबुद्धा[5] तदा ते सत्त्वा बोधिमभिसंभोत्स्यन्ते। य एतद्धर्मपर्यायात्[6] चतुष्पदिकामपि गाथां[7] श्रोष्यन्ति अवैवर्तिकाश्च ते सत्त्वा भविष्यन्त्यनुत्तरायां सम्यक्संबोधौ। आनन्द आह। य इमं धर्मपर्यायं धर्मभाणकाः संप्रकाशयिष्यन्ति तेषां कीदृशं कुशलमूलं भविष्यति। भगवानाह। शृणु आनन्द[8] राजा भविष्यति चक्रवर्ती चतुर्द्वीपेश्वरः। य इमं धमपर्यायं सकलं समाप्तं संप्रकाशयिष्यन्ति[9] मुक्ताश्च भविष्यन्ति जातिजराव्याधिपरिदेवदुःखदौर्मनस्योपायासेभ्यः परिमुक्ता भविष्यन्ति। आनन्द आह। ये पश्चिमे काले पश्चिमे समये सत्त्वा इमं धर्मपर्यायं प्रतिक्षेप्स्यन्ति[10] न पत्तीयिष्यन्ति[11] तेषां का[12] गतिर्भविष्यति कः परायणम्।

1 Ms. ०श्रावकतत्रैव 2 Ms. संप्रकाशिष्यति 3 Ms. कीदृशं
4 Ms. ०स्कन्धं 5 Ms. बोधिमभिसंबुद्धं 6 Ms. ०पर्याया
7 Ms. गाथा 8 Ms. ०रानन्द 9 Ms. ०ष्यति
10 Ms. ०त्तेपिष्यन्ति 11 For प्रत्येष्यन्ति 12 Ms. को

भगवानाह । अलमलमानन्द । मा मे पापकं कर्मस्कन्धं परिपृच्छ । न मया शक्यं परिकीर्तयितुम् । अन्यत्र बुद्धकोटिभिर्न[1] शक्यं[2] परिकीर्तयितुम् । आनन्द आह । परिकीर्तय भगवन् परिकीर्तय । सुगतो भगवानाह । शृणु आनन्द[3] सद्धर्मप्रतिक्षेपकस्य गतिं[4] परिकीर्तयिष्यामि । रौरवे महानरके हाहहे महानरके अवीचौ महानरके तिर्यग्योनौ [5]यमलोके च[5] प्रेतविषये[6] बहूनि कल्पसहस्राणि दुःखमनुभवितव्यम् । यदि कदाचिन्मनुष्यलोके उपपत्स्यते दीर्घशुष्कतालुकण्ठो भविष्यति । द्वादशयोजनानि तस्य जिह्वा भविष्यति । द्वादशहल्यानि प्रवहिष्यन्ति ये एवं वाग्भाषिष्यन्ते । मा भोः[7] कुलपुत्रा भोः[7] क्वचित्[8] सद्धर्मं प्रतिक्षेप्स्यथ[9] । सद्धर्मप्रतिक्षेपकस्य एवं गतिर्भवति । आनन्द आह । केन हेतुना भगवन् सद्धर्मः[10] प्रतिक्षिप्तो भवति । भगवानाह । ये सत्त्वाः पश्चिमे काले पश्चिमे समये एतेषां[11] सूत्रानुधारकाणां धर्मभाणकानामाक्रोशिष्यन्ति[12] परिभाषिष्यन्ते[13] कुत्सयिष्यन्ति पंसयिष्यन्ति तस्य धर्मभाणकस्य दुष्टचित्तमुत्पादयिष्यन्ति तेभ्यः सद्धर्मः प्रतिक्षिप्तो भविष्यति । यः[14] सत्त्वः[15]

1 Ms. ०कोटिभिन 2 Ms. शक्य
3 Ms. ०रानन्द 4 Ms. गतिः
5...5 Ms. यमलोकश्च 6 Ms. ०विषया
7 Ms. भो 8 Ms. कश्चित् 9 Ms. प्रतिक्षिपिष्यथ
10 Ms. सद्धर्म 11 Ms. इमे तेषां 12 For ०क्रोत्स्यन्ति
13 Ms. ०भाषिष्यन्ति 14 Ms. ये 15 Ms. सत्त्वा

त्रिसाहस्रमहासाहस्रयां[1] लोकधातौ सत्त्वानामक्षीण्युत्पाटयेत् अयं ततो बहुतरमपुण्यस्कन्धो भवेत्। एवमेव य एतेषां[2] सूत्र-धारकाणां धर्मभाणकानां दुष्टचित्तप्रेक्षिता अयं ततो बहुतरमपुण्य-स्कन्धं प्रसविष्यते[3]।

अथ आनन्दो[4] भगवतो गाथाः प्रत्यभाषत।

बहुसूत्रसहस्राणि श्रुतं मे शास्तुसंमुखात्।
न [च] मे ईदृशं सूत्रं श्रुतपूर्वं कदाचन ॥
परिनिर्वृतस्य शास्तुस्य पश्चात्काले सुभैरवे।
इदं सूत्रं प्रकाशिष्ये धारयिष्ये इमं नयम् ॥
यत्र सूत्ररत्ने अस्मिं पश्चात्का[ले] भविष्यति।
रक्षां करिष्यामि तेषां पश्चात्काले सुभैरवे ॥
प्रतिक्षिपिष्यामि नेदं गंभीरं बुद्धभाषितम् ॥

अथायुष्मानानन्दो भगवतो गाथा भाषित्वा तूष्णीं स्थितोऽभूत्[5]। अथ काश्यपो महाश्रावको भगवन्तं गाथाभिरध्यभाषत।

सुवर्णवर्णं वरलक्षणांगं
द्वात्रिंशता[6] लक्षणधारिणं जिनम्[7]।
सुभाषितं सूत्र महानुभावगं
गंभीरधर्मं निपुणं सुदुर्दृशम् ॥

1 Ms. तृसाहस्र०　　2 Ms. इमेषां　　3 Ms. ०ष्यति
4 Ms. नानन्दो　　5 Ms. स्थितमभूत्।
6 Ms. द्वातृंशता　　7 Ms. जीनं।

प्रकाशितं सूत्रमिदं निरुत्तरं
मा पश्चकाले परिनिर्वृते जिने ।
धारिष्ये मं सूत्रनयं निरुत्तरं ।

अथायुष्मान् शारद्वतीपुत्रो भगवन्तं गाथाभिरध्यभाषत ।

नमोऽस्तु ते बुद्ध महानुभाव
प्रकाशितं सूत्रमिदं निरुत्तरम् ।
परिनिर्वृतस्य तव लोकनायका
लिखिष्यति सूत्रमेतं निरुत्तरम् ॥
न चापि सो गच्छति दुर्गतीभयं
स्वर्गं च सो गच्छति क्षिप्रमेतत् ॥

अथायुष्मान् पूर्णो मैत्रायणीपुत्रो भगवन्तं गाथाभिरध्यभाषत ।

कृतज्ञो बहुसत्त्वानां मोचको दुर्गतीभयात् ।
प्रकाशितं त्वया सूत्रं गम्भीरं बुद्धदक्षिणम् ॥
अहं हि पश्चिमे काले निर्वृते त्वयि नायके ।
इदं सूत्रं प्रकाशिष्ये हिताय सर्वप्राणिनाम् ॥

इति ।

अथ ब्रह्मा[1] सहांपतिर्भगवन्तं गाथाभिरध्यभाषत ।

नमोऽस्तु ते बुद्ध महानुभावा
प्रकाशितं सूत्रमिदं त्वया शुभम् ।

1 Ms. ब्रह्म ।

परिनिर्वृतस्य तव लोकनायक
रक्षां करिष्यामि ह सूत्ररत्ने ॥

अथ चत्वारो महाराजा भगवन्तं गाथाभिरध्यभाषन्त[1] ।

अहो [सुरम्यं] वरसूत्ररत्नं
प्रकाशितं ईदृश पश्चकाले ।
..................सूत्ररत्नं
प्रकाशितं पश्यति पश्चकाले ॥
सुगतान वै लोकविनायकानां
अहं हि धारिष्यम सूत्ररत्नम् ।
रक्षां करिष्याम्यह सूत्ररत्नं
इमवोचद्भगवानात्तमना ॥

सा च सर्वावती पर्षद्भगवतो भाषितमभ्यनन्दत्[2] ।

अजितसेनव्यकरणनिर्देशो नाम महायानसूत्रं समाप्तम् ॥

देयधर्मोयं बालोसिंहेन सार्धं भार्याजाजतित्रन सार्धं मातापित्रोः परम-दुष्कर्त्रोः[3] सार्धं क्षिणीएन अखिलोटिएन दिशोटजाज मंगलि......उत्रयन्न-गर्विदोटिएन वद्गरि-खुशोटि-खुशोगोटिएन सार्धं सर्वसत्त्वैः सर्व......भिर्यत्र पुण्य तद्भ.........सर्वसत्त्वानामनुत्तरः.........सार्धं परमकल्याणमित्रस्थिरबन्धुएन । लिखितमिदं पुस्तकं धर्मभाणकनरेन्द्रदत्तेन ।

1 Ms. ०भाषत ।
2 Ms. ०नन्दन्
3 Ms. ०दुष्कर्त्रौ

# INDEX

---